BENARES SANSKRIT SERIES;

A

COLLECTION OF NSKRIT WORKS

EDITF IE

PANDITS OF THE BEN SKRIT COLLEGE,

UNDER THE SU

R. T. H. GI

G. THIBAUT

*No.* 4

# श्रीमद्याज्ञवल्क्यादिमहर्षिप्रणीतः शिक्षासङ्ग्रहः ।

## कतिचिद्व्याख्यानयुतः ।

श्रीमत्काशिकराजपाठशालयाधीतविद्येन श्रीमन्मिथिलामण्डलाधीशतो लब्धवैदुष्यप्रतिष्ठेन काशीस्थसुप्रसिद्धविद्वज्जनसंस्थापितवेदविद्यालयाध्यापकेन च पाठकोपाह्वश्रीमद्युगलकिशोरव्यासेन निर्म्मितशिक्षाकीर्त्तिप्रकाशाख्यटिप्पण्या समेतः शोधितः प्रकाशितश्च ।

# A COLLECTION OF ŚIKSHÁS

## BY YÁJÑAVALKYA AND OTHERS,

## WITH COMMENTARIES ON SOME OF THEM.

EDITED AND ANNOTATED BY PAṆḌIT YUGALAKIŚORA VYÁSA

LATE SCHOLAR OF THE BENARES SANSKRIT COLLEGE.

**Fasciculus II.**

*BENARES:*

PUBLISHED BY MESSRS. BRAJ B. DAS & CO.

PRINTED AT THE BENARES PRINTING PRESS.

1890.

लो न तु नादः कदा च न ॥ ४० ॥ जह्नि शत्रून् क्रा-
रान् वनस्पतीन् परिधीन् छिणन्ति शत्रूँ र रनपव्यय-
न्तिः ॥ अनुरङ्गाः पञ्चैकार्द्धमात्रिका भवन्ति ॥ ४१ ॥
नूषा भिन्नो वसुश्चैव अञ्जनाः परिकीर्त्तिताः ॥ एकार्द्ध-
मात्रिकां स्थित्वा पञ्चैते सानुनासिकाः ॥ ४२ ॥ पञ्च
रङ्गाः प्रवर्त्तन्ते घातनिर्घातवञ्जिणः ॥ अह्निणः प्रह्नि-
णो ज्ञेयो यथाऽऽईऊष्ट निदर्शनम् ॥ ४३ ॥ (१) देवाँ
२ ॥ ऽआसादयेति घातः । (२) देवाँ २ ॥ ऽइदेणीति
निर्घातः । (३) देवाँ २ ॥ ऽउपागादिति वञ्जिणः ।
(४) देवाँ २ ॥ ऽऋतुभिरिति अह्निणः । (५) अभिवाँ
२ऽ ॥ ओषतादिति प्रह्निणः ॥ द्विमात्रो मात्रिको वाऽपि
नासामूलं समाश्रितः ॥ अन्ते प्रयुज्यते रङ्गः पञ्चभेः
सर्वनासिकैः ॥ ४४ ॥ वरमहाँश्च बडादित्यो ह्यद्य देव म-
हाँ २ ॥ ऽअसि ॥ बट्सूर्यस्य तु सन्नातो महारङ्गाः प्रकी-
र्त्तिताः ॥ ४५ ॥ परिते परिमाग्ने च अष्टश्चं परिकी-
र्त्तिताः ॥ यस्माद्वयं प्रदृश्यन्ते अतिरङ्गाः प्रकीर्त्तिताः ।

(१) २२ । १७ ॥
(२) २३ । १६ ॥

४६ ॥ (१) अग्ना३ इ पत्नीवन्त्सजूर्जी३ञ्छाचीनि-
ति द्विः ॥ तिरश्चीनो विततः पृच्छामि त्वां वायुरनि-
लमिति सप्त प्लुता भवन्ति ह्यष्टमो न विद्यते ॥ ४७ ॥
मनो ज्योतिश्च वायुश्च प्लुतमेकं द्विधाकृतम् ॥ ओकारा-
द्याः प्लुताः सर्वे न विकल्प्यः कथंचन ॥ ४८ ॥ षडङ्गुलं
तु जात्यस्य ह्रस्वस्यानुपदस्य च ॥ चतुर्थभागमात्रं स्यादङ्गु-
लेनैव वर्त्तते ॥ ४९ ॥ शून्ये गृहे पिशाचोऽपि गर्ज-
न्न च दृश्यते ॥ एवं वर्णाः प्रयोक्तव्या (२) उपहन्मन्नि-
ति दर्शनम् ॥ ५० ॥ स्फुरितं चिबुकोन्मूलं वायुना स-
मापूरितम् ॥ मण्डूकस्फुरणं नाम (३) अपाक्रमेण निदर्श-
नम् ॥ ५१ ॥ इडे रक्तेऽभिश्वनं कृतस्य ते, पारत्नौ, इ.स-
सुवर्ण० सुपर्णम् । इडऽएहि ॥ पदकाले तु वाक्ये च
शश्वाः पञ्च सरस्वति' ॥ अकारौ द्वौ मकारश्च रेफस्त-
दुपरि स्थितः ॥ अशरीरं यमं विद्यात्सर्वाङ्कीर्ति
(४) निदर्शनम् ॥ (५) इयन्ते, धाम्ना, सुवीराद्-
सुप्रजाः' । प्रजाः' । रयिष्ठानां सत्याय । प-

---

(१) इदं गद्यात्मकं पद्यं केचिन्मतमवलम्ब्याङ्को लिखितः ॥ उदाहरणाङ्काः प्रातिशाख्यतो ज्ञेयाः ॥

(२) १७ । ६ ॥

(३) १२ । ७१ ॥

(४) २ । १४ ॥

(५) मूलस्योदाहरणानि संहितातो ज्ञेयानि बुधैरिति ॥

रो दिवा पृथिव्या इति षट् पृथिव्याः स्वरान्ताः ॥ लोहकारस्तथा, कर्ष भस्मसात्कुरुते यदि ॥ एवं वर्णाः प्रयोक्तव्याः संव्वत्सरो निदर्शनम् ॥ ५३ ॥ आयसं च यथा तप्तं निःक्षिपेदाशु सम्भृतः ॥ तच्छब्दं कुरुते प्राज्ञः परिवत्सरो निदर्शनम् ॥ ५४ ॥ जम्बाकारं पठेत्यस्तु कूर्मपृष्ठो विधीयते ॥ एवं च कुरुते प्राज्ञः (१) कल्याण्य इति दर्शनम् ॥ ५५ ॥ यथा कोनाधिनः पक्षिणः उत्पतन्ति पतन्ति च ॥ एवं वर्णाः प्रयोक्तव्याः (२) कल्याण्य इति दर्शनम् ॥ ५६ ॥ कूर्मपृष्ठं परित्यज्य कर्त्तव्यसम्बन्धपद्धनम् ॥ एवं हि कुरुतेऽभिज्ञो (३) देवस्य त्वेति दर्शनम् ॥ ५७ ॥ कुक्कुटः काकमुख्यो वा चकारद्वयमुच्चरेत् ॥ एवं वर्णाः प्रयोक्तव्याः (४) कुक्कुटोऽसि निदर्शनम् ॥ ५८ ॥ कुक्कुटी कामलुब्धा च कुक्कुकुक्षी पुनः पुनः ॥ तद्वदेवं कुरुते प्राज्ञः कुक्कुटोऽसि निदर्शनम् ॥ ५९ ॥ यथा मारसराक्रान्तो निश्वासो लघुचेतसः ॥ एवं वर्णाः प्रयोक्तव्या (५) होता यक्षन्निदर्शनम् ॥ ६० ॥ यथा बा-

---

(१) १७ । ९६ ॥

(२) द्वितीयोदाहरणं 'ख' पुस्तकपाठश्च ॥

(३) १ । १० ॥

लस्य सर्पस्य निश्श्वासो लघुचेतसः ॥ एवः
र्त्तव्यो हकारपरिवर्ज्जितः ॥ ६१ ॥ यथा पुः
ष्हाश्चुम्बतीच पुनः पुनः ॥ तन्मुखं कुरुते :
ज्ज्ञानऽइति दर्शनम् ॥ ६२ ॥ यथा कामातुः
व्दं करोति यादृशम् ॥ तच्छव्दं कुरुते प्र
सिऽएह्यसि निदर्शनम् ॥ ६३ ॥ यथा व
रोषेण प्रतिधावति ॥ एवं वर्णाः प्रयोक्तव्य
किरीविना, दर्शनम् ॥ ६४ ॥ मूत्रं करोति
निं कुर्वीत यादृशीम् ॥ तन्मुखं कुरुते प्रा
दुन्दुभे निदर्शनम् ॥ ६५ ॥ उकारान्ते उका
ते चोभयोर्यदि ॥ द्विरौष्ठ्यन्तु विजानीया
वः स्वर्न्निदर्शनम् ॥ ६६ ॥ एकयत्नो भवेद
ष्ठ्यन्तदुच्यते ॥ द्विभिश्च चतुर्ष्कं च चत
परम् ॥ ६७ ॥ अथ सादृश्यविज्ञेयः सम
योः ॥ न्यूनाधिकानि तान्येव चक्षुषीति वि
६८ ॥ विश्वेदेवास्तमुत्वा च असौ यस्तु व
ये देवा नमस्तेऽस्तु वाजीनः सप्त चक्षुषी ।

(१) ११ । १ ॥
(२) ५ । १० ॥
(३) [illegible]

मानात्तरबाधे च सन्ध्येकात्तरचक्षुषी ॥ समानवर्णयोगं च सम्प्रधानैव चक्षुषी ॥ ७० ॥ मन्त्रो मिन्नस्तथा वातो ऊर्द्ध्वमेनं प्रजायते ॥ मानस्तोके तनये तु चक्षुषी च चतुष्टयम् ॥ ७१ ॥ पूर्वीयां कण्डिकां दृष्ट्वा अपरा सहसँय्युता ॥ तदेव नामग्रहणं न विकल्पः कदा चन ॥ ७२ ॥ पूर्वी विद्धा पराल्या च कण्डिका यत्र दृश्यते ॥ चपला चैव सा ज्ञेया (१) आच्छच्छन्दो निदर्शनम् ॥ ७३ ॥ तिस्रो ह्यर्द्धा अभित्यं च तिस्रोऽअर्द्धा प्रजापतिः ॥ पुनन्तु मेति चत्वारि वायुः पञ्च ततः परम् ॥ ७४ ॥ अनाधृष्टा त्रयश्चैव एषोस्यर्द्धचतुष्टयम् ॥ सँव्वत्सरोऽसि चत्वारि द्यौःशान्तिश्चार्द्धयोर्द्वयोः ॥ ७५ ॥ क्वचित्स्वाहा पृथक्कुर्य्यात्क्वचिद्युक्तां तु कारयेत् ॥ क्वचिच्चादौ विजानीयात्क्वचिच्चान्ते विधीयते ॥ ७६ ॥ वाक्यकालेऽवसाने वा स्वाहान्ते चाहुतिं क्षिपेत् ॥ मन्त्रभागं पृथक्कुर्य्यात्स्वाहाकारं पृथक्पृथक् ॥७७॥ स्वाहादौ च भवेद्वाक्यं (२) नृमणा नृमणास्तथा ॥ अन्ते चादौ पुनश्चान्ते (३) काय स्वाहेति दर्शनम् ॥ ७८ ॥ अक्षराभीतिरेकस्य प्रथमा कण्डिका स्मृता ॥ लक्षणोक्त-

(१) २५ । ५ ॥

पागमविकाराभ्यां वाक्यानामेष निर्णयः ॥९०॥ स्वनेषु-
व्यक्तरिन्द्रं च, अष्टौ व्यव्यत्तथैव च ॥ (१) नामग्रह-
णकाले तु गुरुरेव न संशयः ॥ ९१॥ धर्मि च स्वस्तया
चिन्नऽउपप्रागात्समुद्रवः ॥ स्वरितो वाक्यकालेषु उ-
दात्तं नोपपद्यते ॥ ९२ ॥ एष्वूषु शुक्रा जाते च अ-
भित्वा गोमदूषुणा ॥ स्वरितो वाक्यकालेषु न चोर्ध्व-
मीयते करम् ॥ ९३ ॥ अश्वन्नमीमदन्त च अहरहस्त-
थैव च ॥ वाक्यं च स्वरितं विद्यात्पाठकाले यथा क्र-
मम् ॥ ९४ ॥ अष्टाषो यत्र दृश्यन्ते ह्यन्तस्थाश्च तथैव च ॥
गुरुस्तत्रैव विज्ञेयऽश्ववर्षसङ्ख संयुतः ॥९५॥ अन्तस्थपद-
संयोगे विशेषो नोपपद्यते ॥ अशरीरं यमं विद्यादन्तस्थः
पिण्डनायकः ॥ ९६ ॥ सद्यो जातः समुद्रोऽसि प्रथमाथ
व्युध्यथा ॥ एवं वर्णाः प्रयोक्तव्या गुरवोऽत्र न संशयः ॥
९७ ॥ अभिनीतं निपातं वा जात्यं वा स्वरितं विदुः ॥
पदकाले भवन्त्येवं पाठकाले यथाक्रमम् ॥ ९८ ॥ त-
त्र भाग्यो मन्त्रोऽस्ते वृणीत्यत्रैव दृश्यते ॥ प्रथमोऽत्र
लघुर्ज्ञेयो द्वितीयश्च गुरुर्भवेत् ॥ ९९ ॥ द्वादशैतानि
नामानि देवता च तथैव च ॥ अन्यथा निरयं याति
सम्यक् पाठमजानतः ॥ १०० ॥ (२) छाया च्छिद्रा त-

(१) इमान्युदाहरणानि संहितापाठस्थानि बोध्यानि । अन्येषामुदाहरणानामङ्काः शिक्षान्तरादन्वेष्याः ॥

था छन्दश्छकारा लघुसञ्ज्ञकाः ॥ ह्रस्वा वा यदि वा दीर्घाः शेषा द्वित्वे प्रतिष्ठिताः ॥ १०१ ॥ दीर्घादग्रे छकारोऽपि ह्रस्वादग्रे तथैव च ॥ द्वित्वाक्षरं विजानीयादिति शास्त्रविधानतः ॥ १०२ ॥ दीर्घादग्रे तु यो दीर्घो गिरिशा वर्मणा तथा ॥ गुरुरेव स मन्तव्यश्छादयामि निदर्शनम् ॥ १०३ ॥ मा त्वा यऽआक्रमदाश्चैव सहस्तोमास्तथैव च ॥ पाठमध्ये लघुर्ज्ञेयः पदकाले गुरुर्भवेत् ॥ १०४ ॥ पशुभिर्यजुर्भिराप्यन्ते तस्माद्दृष्टात्तथैव च ॥ ऋचार्धे तु छकारो न त्रिसंयोगं कदाचन ॥ १०५ ॥ न संयोगं न द्विर्भावश्छकारो मृदुरुच्यते ॥ अवसाने गुरुं विद्याच्छौनको वाक्यमब्रवीत् ॥ १०६ ॥ निपातं चाभिनीतं च शेषं नीचतरं क्रमात् ॥ त्रिस्वरं तं विजानीयाद्धोता अोजो निदर्शनम् ॥ १०७ ॥ द्वौ ककारौ स्वरौ द्वौ च नैव मात्रा विधीयते ॥ स्वरे प्रतिस्वरं दद्याद्ब्रेशीनामत्वा निदर्शनम् ॥ १०८ ॥ चतुर्दशाक्षरं चादौ पुनश्चैकादशाक्षरम् ॥ पुनर्दशाक्षरं वाक्यमष्टाक्षरमतः परम् ॥ १०९ ॥ लक्षणैर्वा विहीनस्तु भुक्तमव्यञ्जनं यथा ॥ एवं वर्णाः प्रयोक्तव्याः शीघ्रं ते च निदर्शनम् ॥ ११० ॥ वसुसङ्ख्याक्षरं वाक्यं त्रिपदी वा चतुष्पदी ॥ सप्ततायासन्हि गायत्री अग्निनन्दूतं, सुधी हवम् ॥ १११ ॥ उभौ सप्ताक्षरं वाक्यं पुनश्चैव नवाक्षरम् ॥ अष्टाक्षरं वि-

जानीयाद्यत्पुरुषं च निर्द्दिशेत् ॥११२॥ ऊनाशीति तु वर्णानि अथैतांश्च प्रकीर्त्तिताः ॥ एकाक्षरादिवाक्यानि द्वादशैतानि सङ्ख्यया॥११३॥ द्वादशाक्षरं प्रथमं पञ्चमे पञ्च सप्त वै ॥ षडक्षरं ततो वाक्यं पुनर्द्वादशकं स्मृतम् ॥११४॥ एकादशाक्षरम्प्राज्ञरन्ते च द्वादशाक्षरम् ॥ एवं वर्णाः प्रयोक्तव्या अथैतानिति दर्शनम् ॥११५॥ अष्टादशाक्षरं वाक्यं नाकपृष्ठे च पञ्चधा ॥ सप्तदशाक्षरं चैव वैश्वदेवी निदर्शनम् ॥ ११६ ॥ रौद्राध्यायोत्तरेणैव कण्डिकाशतकेन तु ॥ ततो वाक्यं प्रकुर्वीत रुद्रार्द्धे षोडशाक्षरम् ॥ ११७ ॥ अष्टादशाक्षरं वाक्यं पुनः षोडशकैः शुभैः ॥ एवं वर्णाः प्रयोक्तव्या अश्मन्नूर्ज्जं विनिर्द्दिशेत् ॥ ११८ ॥ पुस्तके (१) प्रज्ञयाऽधीतं नाधीतं गुरुसन्निधौ ॥ न भ्राजन्ते सभामध्ये जारगर्भा इव स्त्रियः ॥ ११९ ॥ एकः सर्वं न जानाति सर्वं एकं न विन्दति ॥ एवं मत्वा न शुद्ध्यन्ति पण्डिताः शुद्धभाविनः ॥ १२० ॥ (२) श्रुत्वा वेदविनाशं तु सम्यग्ब्रूयान्न वै बुधः ॥ आहूय तं विविक्ते वै तस्य धर्मो न हीयते ॥ १२१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमा-

(१) प्रत्ययाधीतमिति 'ख' पुस्तकपाठश्च ॥

(२) शुभभाजिनइति 'क' 'ग' पुस्तकयोः पाठः ॥

नं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ १२२ ॥ लक्षणं न त्यजेद्धीमान्सम्प्रदायोऽन्यथा भवेत् ॥ लक्षणेन विना शिष्यः सम्प्रदायो विनाशवान् ॥ १२३ ॥ नासौ तत्फलमाप्नोति सम्यक्पाठमजानतः ॥ उत्तमो लक्षणज्ञानी लक्ष्यज्ञानी तु मध्यमः ॥ १२४ ॥ लक्ष्यलक्षणयोर्ज्ञानी तद्धि पात्रं (१) प्रचक्षते ॥ लक्षणेन विना वाणी निर्म्मलाऽपि न शुद्ध्यति ॥ १२५ ॥ प्रमदा रूपसम्पन्ना दरिद्रस्येव योषिता ॥ स्वरहीना यथा वाणी वस्त्रहीनास्तु योषितः ॥ १२६ ॥ एवं वर्णा न शोभन्ते प्राणहीनाः शरीरिणः ॥ वेदपाठी सदा सम्यग्विचार्य्यैवं पुनः पठेत् ॥ १२७ ॥ त्विषस्त्वा रूपाण्यबोध्यग्निरेषोऽसीति तथाऽपरः ॥ केतुङ्कृण्वन्निति च ते षकारा मूर्द्धजाः स्मृताः ॥१२८॥ अग्नेरनीकं, व्युदवा हि, विश्वे देवा, द्वितीयकम् ॥ उदग्ने चायमुत्तरा, नमो वन्न्याय, हीत्ययम् ॥१२९॥ देवबर्हि,र्यदापोऽस्ति त्वामद्य, स्वस्ति न स्तथा ॥ मा नो मित्रो हि वद्यन्ती दकारा ययुतास्तथा ॥ १३० ॥ इत्यमोघानन्दिनी शिक्षा समाप्ता ॥

---

(१) तद्धि पात्रं प्रशस्यते इति 'क' पुस्तकपाठश्च ॥

# अथ लघ्वमोघानन्दिनी शिक्षाऽऽरभ्यते ॥

पादादौ च पदादौ च सँय्योगावग्रहेषु च ॥ जः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ १ ॥ अनूकायुक्तेन मनसा तद्वत्त्वा यामि तथाऽपरम् ॥ अनूकाशेन बाह्यं च तुरीयमनुया पदे ॥ २ ॥ पदादावप्यविच्छेदे सँय्योगान्ते च तिष्ठताम् ॥ वर्ज्जयित्वा रहौ याः नामीषत्स्पृष्टत्वमिष्यते ॥ ३॥ मिद्वदी, न्यमिनाँश्च रोचनाश्चयथा भवेत् ॥ तथा पार्थ्याय सूर्य्यश्च मुह्यन्त्वन्ये समृह्यत् ॥ ४ ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ वि॰ ईषत्स्पृष्टो यथा विद्यात्पदच्छेदात्परो भवेत् ॥ ५ ॥ विभाषया यकारश्च नित्यमाम्रेडितेऽपि च ॥ यत्र यत्रेति मा यज्ञं तथा येति पदादपि ॥ ६ ॥ अथातऽउत्तरो यः स्यात्तथा नेति पदात्परः ॥ भवन्त्यतेऽपि पूर्वञ्च तथा च स पदादपि ॥ ७ ॥ अथा वयमादित्यादावथोयेऽअस्य दृश्यते ॥ न यत्परो यथा च स्यात्स पदे तदुदाहृताः ॥ ८ ॥ वो वां वा वै वि वौ पाठे उपसर्गात्परो लघुः ॥ अथ मा स न शब्देभ्यो विभाषाऽऽम्रेडिते यवौ ॥ ९ ॥ यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् ।

यत्र यत्र विशेषः स्यात्तदिदानीं तु कथ्यते ॥ १० ॥ त्वदर्थवाचिनौ वो वां, वा वै यदि निपातजौ ॥ आदे-शाश्च विकल्पार्था ईषत्स्पृष्टाश्च ते स्मृताः ॥ ११ ॥ दे वो वः सविता य़ा वां, व्रातो वेति तथा न तत् ॥ तव व्रायइतस्पते तानऽ आवेति कीर्तिताः ॥ १२ ॥ य-त्कृतं सूत्रकारेण तद्धव्याप्त्यम्प्रसारणम् ॥ तज्ज्ञेयं सर्वशाखासु न तु वाजसनेयिनाम् ॥ १३ ॥ लक्षण-स्य विरोधेऽपि पाठैक्यं यदि दृश्यते ॥ तत्तथा प्रतिप-त्तव्यँय्यज्ञायज्ञा वऽइत्यथ ॥ १४ ॥ अनुस्वारो द्विमा-त्रः स्यात्स्वर्णव्यञ्जनोदये ॥ ह्रस्वाद्वा यदि वा दीर्घाद्दे-वानाꣳ॰ हृदयेभ्यः ॥ १५ ॥ स ꣳ स्पृष्टा सि ꣳ स्यसि सँय्योगे ह्रस्व इष्यते ॥ मध्यम ꣳ श्रयायेति सँय्योगो न द्विरुच्यते ॥ १६ ॥ ज्ञात्वा वेदविनाशं तु सम्यग् ब्रू-यान्न वै बुधः ॥ आहूय तं विविक्ते वै तस्य धर्म्मो न हीयते ॥ १७ ॥ (१) इति श्री लघ्वमोघानन्दिनी शिक्षा समाप्ता ॥

---

(१) इदं पत्रं प्राक् शिक्षायां लिखितं तथा ऽपि सम्प्रदायविदो ऽत्रापि लिखन्त्यतो मया लिखितम् ॥

# अथ माध्यन्दिनमहर्षिप्रणीता शि-क्षाऽऽरभ्यते ॥

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ १ ॥ स्वराद्द्वित्वमवाप्नोति व्यञ्जनं व्यञ्जने परे ॥ हरौ न यद्यचः पूर्वौ निमित्तं व्यञ्जनस्य च ॥ २ ॥ दूर्पे चोर्जे ला ॥ स्वरपूर्वाः शषसहा अन्तस्थाश्च तथा यदि ॥ निमित्तभूता द्वित्वस्य स्पर्श एव न संशयः ॥३॥ अश्मन् ॥ स्पर्शपूर्वा यरलवाः स्पर्शपूर्वाः शरस्तथा ॥ व्यञ्जनञ्च ततः पूर्वं द्वैधाभावं न चाप्नुयात् ॥ ४ ॥ अयक्ष्माः ॥ विसर्गाच्च परः कादिर्व्यञ्जनात्किल पूर्वगः ॥ ऊष्मपूर्वौ नङौ द्वित्वमापद्यते पदान्तगौ ॥ अपि स्वरतरावेव श्लिष्टौ भवति नान्यथा ॥ ५ ॥ विष्णोः कर्म ॥ दध्यङ्ङृषिः ॥ अश्मन्नूर्जम् ॥ अत्र येन निमित्तेन द्वित्वं व्यञ्जनमश्नुते ॥ द्वितीयस्य च प्रथमस्तुरीयस्य तृतीयकः ॥ ६ ॥ वाङ्क्भ्याम् ॥ स्ववर्गे च परे सैवापञ्चमे परतः स्थिते ॥ सवर्गे च यमे चैव ऋवर्णे न तथा शलि ॥ ७ ॥ तद्देवानाम् । ऋद्धिः । तन्नः । अग्निः । पितृणाम् ॥

अत्र कवर्गीयखकारा निर्दिश्यन्ते ॥ आखरेष्ठा
आखुस्ते । २ । मयूखैः । ३ । धाम्ना लेखीः ।
ततः खनेम । ५ । उखाङ्कृणोतु । ६ । उखाम्परि
मि । ७ । खनत्ववट । ८ । दधतूखे । ९
मित्त्रैतान्त ऽउखाम् । १० । त्वङ्खादि । ११
सुखादितान् । १२ । अभाक्खा । १३ । गन्ध
अखनन् । १४ । आखिदते । १५ । प्रखिदते । १
विशिखा ऽइव । १७ । श्रियै शिखा । १८ ।
म्या ऽआखून् । १९ । ऋतूनामाखुः । २० । ख
वैश्वदेवः । २१ । नखेषु । २२ । मोरवा अ
न्तौ । २३ । उखायाः सदने स्वे । २४ । मधु ग्र
। २५ । क्षौषखम् । २६ । शङ्खधमम् । २७ । म
शिरो ऽसि । २८ । मखाय त्वा । २९ । अथ ग
तर्चानां निर्णयः ॥ इषे त्वा एदम् । अश्वस्तूपरः । समि
अग्नेन् । सहस्रशीर्षा पुरुषः । तदेव । स्वाहा प्र
अस्मैष्वध्यायेषु न गलिता ऋचः ॥ १ ॥ द्वितीये ऽ
ये अग्ने व्रतपते इति प्रविष्टास्त्रयस्त्रिंशत् । २ ।
तीये ऽयमग्निः पुरीष्य ऽइति प्रविष्टा द्वाषष्टिः ।
पञ्चमे ऽग्ने व्रतपा ऽ उरु विष्णो ऽइति प्रविष्टे
कचत्वारिंशत् । ५ । षष्ठे प्रथमा ऋग्गलिता रेवती
ध्वमित्यतः परा देवस्य त्वान्तः पञ्चविंशत् । ६ । त्व

स्पतये त्वाकृतोऽसि आत्मने मे अग्ने नयाय न्नो लुप्ते चतुश्चत्वारिंशत् । ७ । आदित्येभ्यस्त्वेत्यत्र कदाचन सँव्वर्चसा देवा गातुविद ऽ उदुत्यमवभृथ निचुम्पुण मिलिता अष्टपञ्चाशत् । ८ । देव सवितरित्यत्र देवस्याहं एकोनचत्वारिंशत् । ९ । अपो देवा इत्यत्र सोमस्य त्विषिरिमं देवा इति लुप्ते द्वात्रिंशत् । १० । युञ्जानः प्रथममित्यत्र युञ्जते देव सवितः पृथिव्याः सधस्थाद्वसवस्त्वाच्छृन्दन्तु मिलिताऽअष्टसप्ततिः । ११ । दृशानो रुक्मऽ इत्यत्र हꣳसः शुचिषदक्रन्ददग्निर्दृशानो रुक्मः समिधाग्निं सहस्य्या पुनरूर्ज्जाऽ अयन्ते भवतन्नऽअष्टोत्तरशतम् ॥ १२ ॥ मयि गृह्णाम्मीत्यत्राग्निर्म्मूर्द्धाऽपाम्पृष्ठम्मही द्यौर्व्विष्णोः कर्म्माणि च्चित्रं देवानां त्रिपञ्चाशत् ॥ १३ ॥ ध्रुवक्षितिरित्यत्र शुक्रश्च व्विश्वकर्म्मा त्वा द्वे नभश्चेपश्चेति पञ्चविंशतिः ॥ १४ ॥ अग्ने जातानित्यत्राग्निर्मूर्द्धा त्वामग्ने पुष्कराद्ध्रुवो यज्ञस्यायमिहायन्ते लोकं पृण ताऽअस्येन्द्रँव्विश्वा नवैता लुप्यन्ते परमेष्ठी त्वा द्वे मिलिते चतुःपञ्चाशत् ॥ १५ ॥ नमस्ते इत्यत्र नीलग्रीवा द्वितीया नमोऽस्तु द्वे मिलितास्त्रयस्त्रिषष्टिः ॥ १६ ॥ अश्मन्नूर्ज्जमित्यत्र हिमस्य त्वा-

व्वाजस्य नु देवस्य त्वा यास्ते याव्ऽउद्बुद्ध्यस्व येन व्व
सि व्विनस्त्वँय्यविष्ठेत्यष्टमिलिता एकोनसप्ततिः । १८
स्वाहीन्त्वेत्यत्र व्वायोः पूतः कुविदङ्गेति द्वे त्रिनवतिः ।१९
प्यवस्य योनिरित्यत्र समुद्रे ते उताप्पः पुत्रमिव पितर
निषसाद यदि जाग्रद्यदापो यदि दिवेति यद्ग्रामे य
मिच्छियामो यत् सुरामं नवैकाशीतिः ॥ २० ॥ इमं
इत्यत्र तत्त्वा याम्नो व्वाजेवाजेऽवत होतायक्षदिन्द्रम्
षभस्य सरस्वतीम्मेषस्येति प्रविष्टाः सप्तपञ्चाशत् ॥२१
तेजोऽसीत्यत्र तत्सवितुर्व्विश्वो देवस्य पृथिव्यै स्वाहा म
धवे स्वाहा व्वाजाय स्वाहाऽसवे स्वाहेति प्रविष्टाऽएक
विंशतिः ॥२२॥ हिरण्यगर्भऽइत्यत्र कः स्वित्सूर्य्यऽएका
की का स्विदद्यौरासीत्प्रजापते न सप्तपञ्चाशत् ॥२३
यादन्द्धिरित्यत्र हिरण्यगर्भः सँय्यः प्राणतोऽग्न
त्वं चतुश्चत्वारिंशत् ॥ २५ ॥ अग्निस्त्रेत्यत्र व्वैश्वा
नरो नः पञ्चविंशत् ॥ २६ ॥ समास्त्वेत्यत्र उ
द्वयं चतुश्चत्वारिंशत् ॥ २७ ॥ होता यक्षदित्यत्र दे
वा दैव्या होतारा शुचिमुष्णिहानन्तरं सर्वे लुप्त
अन्तस्त्रिपञ्चाशत् ॥ २८ ॥ देव सवितरित्यत्र तत्सवि
तुर्विंशत् ॥ ३० ॥ अस्माजरासऽइत्यत्र युदवा हि अय
मिह मूर्द्धानन्दिवऽऋदुत्त्यं विश्वेऽअदेन्द्रवायूऽइमे युञ्जं
देवानां गावऽउप दैव्यावध्वर्यूऽअदब्धेभिः सवितः सप्ता

षीतिः । ३३ । यज्जाग्रतऽइत्यत्राकृष्णेन सप्तपञ्चाश-
त् । ३४ । अपेतऽइत्यत्राश्वत्थे वः सुमित्रिया नऽउद्वय-
मग्नऽआयूꣳषीत्यष्टादश । ३५ । ऋचंवाचमित्यत्र भू-
र्भुवः कया नः कस्त्वा स्योना पृथिव्यापोहिष्ठेति त्रि-
र्न्नमस्ते हरसे सुमित्रिया नोऽभीषुणो दृते दृꣳहमेति
त्रयोदश । ३६ । देवस्य त्वेत्यत्र देवी द्यावापृथिवीन्द्र-
स्यौजोऽश्वस्य त्वेयत्यग्रे हृदे त्वा युञ्जते मनः प्रैतु म-
खस्य शिरस्त्रयोदश । ३७ । द्वितीयदेवस्य त्वेत्यत्र सु-
मित्रिया न ऽउद्वयमेधो ऽसीड ऽएह्यदित्यै रास्नासीन्द्रा-
यत्वा षड्द्वाविंशतिः । ३८ । ईशा वास्यमित्यत्रान्धन्त-
मोऽन्यदेवासम्भूतिमित्रितास्त्रयोऽग्नेनय त्रयोदश ।
४० । एवं चतुष्षष्ठ्युत्तरशतं लोपाः । एकादशोत्तर
मष्टादशशतैः सहेति ॥ इति प्रथमा माध्यन्दिनीयशि-
क्षा समाप्ता ॥

# अथ द्वितीया लघुमाध्यन्दिनं शिक्षा प्रारभ्यते ॥

---

अथ शिक्षां प्रवक्ष्यामि माध्यन्दिनमतं यथा
कारस्य खकारः स्यात्टुकयोगे तु नो भवेत् ॥
षे लक्ष्यं कृष्याऽवचा समुद्रः प्रत्युदाहृतिः ॥
विद्यमानस्य ह्यसंयुक्तस्य यस्य च ॥ २ ॥ आदेः
जकारः स्यादुक्तः सन्हरणेन तु ॥ यज्ञेन यज्ञं
मयूरे प्रत्युदाहृतिः ॥ ३ तस्माद्यज्ञात्सर्वहुत
मस्माद्यत्तथैव च ॥ रेफेणाथ हकारेण युक्तस्य
या भवेत् ॥ ४ ॥ सूर्य्यां बाह्यन्तु वै लक्ष्यं आदाय
त्युदाहृतिः ॥ यकारकौरयुक्तस्य जकारः सर्वथ
त् ॥ ५ ॥ सहरय्या तथा व्यूह्या चोपसर्गपरः
उपयज्ञम्मानुषाणामपि यन्तीत्युदाहृतिः ॥ ६ ॥
वकारो विज्ञेयः पदादौ पठितो भवेत् ॥ वि
दाहृतिर्ज्ञेया सविताल्लघुः स्मृतः ॥ ७ ॥
वै लघुतरस्तत्र व्यायट्टतरम्मते ॥ उपसर्गपरो यत्र
कारो लघुर्मतः ॥ ८ ॥ वो वां वा वै मन्त्रपाठे
गुरवः पदे ॥ प्रवायुमच्छा बृहती व्वातो वेति ।
नम् ॥ ९ ॥ रेफो रेकत्वमाप्नोति ग्रषहेषु परे

ददर्श वर्षो ऽग्रहीच्च संयोगे नैव कारयेत् ॥ १० ॥
व्यम्मन्वघ्यायान्तहृदा तत्र तावदुदाहृतिः ॥ लकारो ऽपि च सावर्ण्याद्देकारसदृशो भवेत् ॥ ११ ॥ शतवल्शा-च वल्हा च तत्र तावदुदाहृतिः ॥ अनुस्वारो यत्र कुत्र ॲ०कारो भवति ध्रुवम् ॥ १२ ॥ ह्रस्वो दीर्घो गुरुश्चेति त्रिविधः परिकीर्त्तितः ॥ ह्रस्वात्परो भवेद्दीर्घो ह्रॲ०स ऽइति दर्शनम् ॥ १३ ॥ दीर्घात्परो भवेद्ध्रस्वो मा ॅ सं-ब्य ऽइति दर्शनम् ॥ गुरौ परे ह्यनुस्वारो गुरुरेव हि स स्मृतः ॥ १४ ॥ सि ॅ ह्यसीति तत्र तावद्दकारे दी-र्घ ऽएव सः ॥ देवाना ॅ हृदये तद्वत्स्कराणां तथा सूक्ते ॥ १५ ॥ अथायोगवाहानाह ॥ अवर्णाच्च ऋका-राच्च विसर्गः कण्ठ्य एव सः ॥ इवर्णाच्च तथोवर्णात्तथा चैकारपूर्वकः ॥ १६ ॥ औकारपूर्वकश्चैव ताल्व्यो भवति-ध्रुवम् ॥ एकाराच्च कण्ठतालुर्विसर्गो भवति ध्रुव-म् ॥ १७ ॥ कण्ठोष्ठ्यस्तु तथौकाराद्विसर्गो भवति ध्रु-वम् ॥ देवो वः सविता चात्र ह्कारसदृशो भवेत् ॥ १८ ॥ देवीस्तिस्रो विसर्गस्तु ह्िकारसदृशो भवेत् ॥ आखुस्ते पशुरित्यादौ ह्ुकारसदृशो भवेत् ॥ १९ ॥ विसर्गस्याग्नेरित्यादौ ह्ेकारसदृशो भवेत् ॥ विसर्गो बाह्वोरित्यादौ होकारसदृशो भवेत् ॥ २० ॥ अथ स्वैर्हवैरित्यादौ ह्िकारसदृशो भवेत् ॥ विसर्गो द्यौ-

कथं वदेत् ॥ ९ ॥ अथ प्रथमतो वर्णसञ्ज्ञाऽभिधीयते मया ॥ यया विना न सिद्ध्यन्ति व्यवहारा नृणामिह ॥ १० ॥ एकविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ॥ द्विगुणानि व्यञ्जनानि चैतावान्वर्णसङ्ग्रहः ॥ ११ ॥ ऋटपर्यन्ताः स्वरास्तेषां लृकारो ह्रस्वएव च ॥ सन्ध्यक्षराण्यह्रस्वानि ते चैवमेकविंशतिः ॥ १२ ॥ ककारादिमकारान्ताः स्पर्शाः स्युः पञ्चविंशतिः ॥ चतस्रो यादयोऽन्तस्था ऊष्माणः शषसाः (१) सहाः ॥ १३ स्पर्शानां पञ्चमैर्योगे चत्वारश्च यमाः स्मृताः ॥ अनुस्वारो विसर्गश्च जिह्वामूलीयएव च ॥ १४ ॥ उपध्मानीइति च द्विस्पृष्टश्च तथाऽपरः ॥ द्विस्पृष्टता च विज्ञेया डढयोः स्वरमध्ययोः ॥ १५ ॥ पदकाले वियुज्येत द्विस्पृष्टो न भवेत्तदा ॥ सव्यञ्जनः सानुस्वारः शुद्धो वाऽपि स्वरोऽक्षरम् ॥ १६ ॥ चतुर्णां पञ्चमैर्योगे उत्पद्यन्ते यमाश्च ये ॥ कुँ खुँ गुँ घुँ इति च ते चत्वारो नात्र पञ्चमः ॥ १७ ॥ वर्गाणां प्रथमौ द्वौ द्वावूष्माणश्च हवर्जिताः ॥ जित्सञ्ज्ञा भवन्त्येते शेषा धिसञ्ज्ञकाः स्मृताः ॥ १८ ॥ शषसा मुत्समाख्याता अवर्णः कण्ठ्यसञ्ज्ञकः ॥ सिम्सञ्ज्ञका ऋटपर्यन्ता भावी स्यात्काराद्यवर्जितः ॥ १९ ॥ अन्त्याद्वर्णाद्भवेद्वर्णः पूर्वः स उ-

यमाभिधः ॥ एताः सञ्ज्ञा बुधैर्ज्ञेया व्यवहारप्रसिद्धये ॥ २० ॥ ळळ्हजिह्वामूलमवोपध्मानीयस्तथैव च ॥ नासिक्याश्च तथा चास्मिन्वर्णा वर्ज्याः सदैव हि ॥ २१ ॥ एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ॥ त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रिकम् ॥ २२ ॥ तदर्द्धमणु तस्यार्द्धं परमाण्वभिधीयते ॥ वर्णग्रहे सवर्णोऽपि सङ्ख्या स्पर्शेषु कीर्त्तिता ॥ २३ ॥ अथ वर्णसमाम्नाये स्थानं करणसँय्युतम् ॥ आत्मशक्त्या प्रवक्ष्येऽहं तज्ज्ञातव्यमघं बुधैः ॥ २४ ॥ अष्टौ स्थानानि वर्णानामुरः कण्ठशिरस्तथा ॥ जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ २५ ॥ हकारः पञ्चमैर्य्युक्तो योऽन्तस्थाभिरथाऽपि वा ॥ औरस्यं तं विदुः प्राज्ञाः कण्ठ्यं शुद्धं प्रचक्षते ॥ २६ ॥ ऋवर्णोऽथ कवर्गश्च जिह्वामूलीय एव च ॥ जिह्वामूले भवन्त्येषां जिह्वामूलं च कारणम् ॥ २७ ॥ इवर्णोऽथ चवर्गश्च एकारौ यशैः सह ॥ तालुस्थाना भवन्त्येषां जिह्वामध्यं तु कारणम् ॥ २८ ॥ षकारोऽथ टवर्गश्च मूर्द्धन्याः परिकीर्त्तिताः ॥ जिह्वायाः प्रतिवेष्ट्याग्रमेतेषां कारणं स्मृतम् ॥ २९ ॥ ऌलसिताः स्मृता दन्त्या जिह्वाग्रकरणा हि ते ॥ रेफस्य दन्तमूलोत्थो जिह्वाग्रेण विधीयते ॥ ३० ॥ उवर्णो-

स्मृता वर्णा उपध्मानीय एव च ॥ ३१ ॥ समा
करणा नासिक्यौष्ठ्याः प्रकीर्त्तिताः ॥ वकार ओ
तो दन्ताग्रकरणः स्मृतः ॥ ३२ ॥ अवर्णश्च
ह्कारश्चापि केवलः ॥ कण्ठ्या वर्णाः स्मृता ह्यो
नुमध्यं तु कारणम् ॥ ३३ ॥ यमानुस्वारनासिक्य
सामूलभवा दृशा ॥ मुखनासिकाकरणोऽनुना
ति स्मृतः ॥ ३४ ॥ पूर्वा मात्रा तु कण्ठ्यस्य एका
रयोर्भवेत् ॥ तालव्यस्य तथौष्ठ्यस्य परा प्रोक्ता य
मम् ॥ ३५ ॥ ऐकारौकारयोश्चैवं तत्त्वं ज्ञेयं
णैः ॥ एऐ तु कण्ठ्यतालव्यौ ओऔ कण्ठोष्ठजौ
३६ ॥ एतद्वर्णसमाम्नायस्थानं करणसंयुतम् ॥
व्यं तन्मया प्रोक्तं शास्त्रतत्त्वार्थदर्शनम् ॥ ३७ ॥
द्यस्य भवेत्स्थानं करणं वा विशेषणम् ॥ सवर्णं
ङ्ग्राह्य आस्ययत्नस्तु भिद्यते ॥ ३८ ॥ संवृतं
तद्वदस्पृष्टं स्पृष्टमेव च ॥ ईषत्स्पृष्टं चार्द्धस्पृष्टमा
स्तु षड्विधः ॥ ३९ ॥ अकारः संवृतो ज्ञेयो वि
तरे स्वराः ॥ अस्पृष्टाख्यप्रयत्नाश्च स्वराः सर्वे
हि ॥ ४० ॥ स्पृष्टाः स्पर्शास्तु विज्ञेया अन्तस्था
त्स्पृशः ॥ अर्द्धस्पृष्टाश्च विज्ञेया ऊष्माणो वर्णवे
४१ ॥ ऋलोर्म्मध्ये भवत्यर्द्धमात्रा रेफलकार यो

मात्रस्यैकमात्रस्य संवृतादिप्रयत्नतः ॥ भिन्नस्याप्यस्तु
सावर्ण्यं तदर्थमिदमुच्यते ॥ ४३ ॥ अथातोऽवरतो व-
च्मि चर्चां पूर्वपराङ्गयोः ॥ स्वारप्रयोजना चासौ वे-
दितव्या विचक्षणैः ॥ ४४ ॥ सँय्योगस्यादिभूतो यः स
पूर्वाङ्गं भवेद्यथा ॥ अश्वः शश्वसँय्योगे शः पूर्वाङ्गः श-
वोऽन्यतः ॥ ४५ ॥ यमश्च पूर्वस्याङ्गं स्याच्चकारात्पूर्वसं-
युतः ॥ रुक्मः पूर्वस्य कयमावुत्तरस्य तु मः स्मृतः ॥४६॥
सँय्योगादिपरद्वित्वे पूर्वाङ्गं क्रमजं यथा ॥ पार्श्वं र-
शौ तु पूर्वस्य परस्य शवयात्मकम् ॥ ४७ ॥ क्रमजाच्चो-
त्तरं स्पर्शे परे पूर्वाङ्गकँय्यथा ॥ पार्ष्ण्यां पूर्वस्य रषषाः
परस्याङ्गं णयात्मकम् ॥ ४८ ॥ सत्व्यञ्जनं च यस्याङ्गं
तत्तेन सस्वरं भवेत् ॥ एतदर्थमिदं प्रोक्तं स्वारसन्देह-
भेदकम् ॥ ४९ ॥ अनुस्वारो विसर्गश्च नासिक्योऽथ य-
मास्तथा ॥ जिह्वामूलमुपध्मा च नवैते स्युः पराश्रयाः
॥ ५० सँय्योगवाह्रा एवैते निजस्वरविवर्जिताः ॥ पू-
र्व्वस्याङ्गं भवन्त्येते स्वर एतेषु पूर्ववत् ॥ ५१ ॥ स्वरभ-
क्तिश्च पूर्वाङ्गं देवब्बर्हिर्यदाहृतिः ॥ ऋकारे च तथोका-
कारे तां यत्नेन विवर्ज्जयेत् ॥ ५२ ॥ रेफो वाऽथ ल-
कारो वा यत्रोष्मणि स्वरोदये ॥ स्वरभक्तिर्भवेत्तत्र पू-
र्व्वमाक्रम्य पठ्यते ॥ ५३ ॥ ऊष्मणामुपरिस्थस्तु रेफो
याति रेवर्णताम् ॥ रेफत्वं पुनरायाति यद्यूष्माणोऽन्य-

संयुताः ॥ ५४ ॥ ऊष्मणां स्वरभक्तिस्तु द्विर्भावं बाधते यथा ॥ वर्षो वर्षीयसि ह्वार्षोच्छतवल्शोऽपि सिध्यति ॥ ५५ अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव च लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टस्तदनन्तरम् ॥ ५६ ॥ तैरोव्यञ्जनएवाथ तैरोविराम एव च ॥ पादवृत्तस्तथाभाव्यस्तथाऽष्टमः ॥ ५७ ॥ एकपदे निपूर्वस्तु सयवो जात्यदृष्यते ॥ अपूर्वोऽपि परस्तद्वज्जान्यं कन्या स्वरित्यपि ॥ ५८ ॥ सम्मोदात्तादयो ज्ञेया परेऽभिनिहितादयः ॥ यथो नीचपरास्तत्र प्रश्लिष्टान्तं निदर्शनम् ॥ ५९ ॥ एओ आभ्यामुदात्ताभ्यामकारो नीच एव च ॥ लुप्यते सन्धिकार्य्ये यत्तं चाभिनिहितं विदुः ॥ ६० ॥ तेऽसरसां च तेऽवन्तु वेदोऽसीति तथोऽप्यपि ॥ इउ वर्णावुदात्तौ चेदनुदात्तस्वरोदयौ ॥ ६१ ॥ यवाभ्यां चैव संयुक्तौ तदा क्षैप्रः स्वरो भवेत् ॥ व्याव्यर्वं स्त्वयम्बकँय्यदद्वन्नो योजान्विन्द्रेति च ॥ ६२ ॥ उच्चः पूर्वः परो नीच इकारोऽन्योऽन्यसङ्गतः ॥ प्रश्लिष्टः स स्वरो ज्ञेयः स्रुचीवाभीन्धताँय्यथा ॥ ६३ ॥ उदात्तपूर्वो यत्र स्यान्नीचो व्यञ्जनसंयुतः ॥ स तैरोव्यञ्जनइति स्वरो भवति तद्यथा ॥ ६४ ॥ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योते निदर्शनम् ॥ उदात्तावग्रहो यत्र स तु तैरोविरामकः ॥ ६५ ॥ स्वरो ज्ञेयः पदेऽन्यत्र तैरोव्य-

ञ्जनएव तु ॥ यथा गोपताविति गोपतौ यज्ञपतिस्त-
था ॥ ६६ ॥ स्वरयोरन्तरे यत्र विवृत्तिर्यदि दृश्यते ॥
सा पादवृत्त इत्याख्यः काँइमरे निदर्शनम् ॥ ६७ ॥ उ-
दात्तादिकदात्तान्तो नीचोऽवग्रह एव च ॥ तथाभा-
व्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥ ६८ ॥ माध्यन्दि-
नविरोधी स्यात्तथाभाव्यस्तु यः स्वरः ॥ भिन्नो यतो-
ऽत्र दृश्येते तावुदात्तानुदात्तकौ ॥ ६९ ॥ तस्मान्माध्य-
न्दिनीयानां पदे कम्पो विधीयते ॥ तथोक्तमौज्जिहा-
यनकैर्माध्यन्दिनानुसारिभिः ७० ॥ अवग्रहो यदा नी-
चप्रोच्चयोर्मध्यतः क्वचित् ॥ तथाभाव्यो भवेत्कम्पस्तनू-
नप्त्रे निदर्शनम् ॥७१॥ जात्याभिनिहितक्षैप्रप्रश्लिष्टाः
स्वरिता इमे ॥ नीचपूर्वो यदा त्वेते तिर्य्यक्स्वारस्तदा
भवेत् ॥ ७२ ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च च-
तुर्थकः ॥ एते स्वराः प्रकम्पन्ते दृष्ट्वोदात्तं पुरः स्थित-
म् ॥ ७३ ॥ यथा व्यक्ताः पस्त्या स्वा युद्धोऽस्माकन्त-
थाऽपरम् ॥ परमेष्ठ्यभिधीतोऽभीममित्यादि निदर्श-
नम् ॥ ७४ ॥ नीचपूर्वोदात्तपरः स्वरोऽसौ प्रणिहन्यते ॥
अन्यथा नीचएव स्यात्स्वर्गं घर्म्मादिकँय्यथा ॥ ७५ ॥
स्वरितादनुदात्तं यत्तत्सर्वं प्रचयाह्वयम् ॥ स्यादुदात्त-
मयं चैव त्वामद्येत्यादिकँय्यथा ॥ ७६ ॥ तिर्य्यक्स्थान-
गते ह्रस्वेऽनुदात्तो दृश्यतेऽपरः ॥ प्रचितं तँव्विजानी-
यादुदात्तं स्वरमाप्नुयात् ॥ ७७ ॥ जात्यं कृत्वा ततः

पश्चात्प्रचितो दृश्यते यदि ॥ तन्तु तत्रैव निर्वर्त्य पश्चा-
द्ध्रस्वं प्रचालयेत् ॥ ७८ ॥ नोदात्तस्वरितात्पूर्व्वं प्रचितं
स्यादुदात्तवत् ॥ कृत्वानुदात्तमथ तमुदात्तस्वरमाचर-
रेत् ॥ ७९ ॥ यथा स्यात्स्वरितात्स्वारो व्याजे वाजेऽव-
तेति च ॥ स्वरितोदये सेनानी ग्रामण्यौ, सहस्राय
च॥ ८० ॥ तैरोव्यञ्जनवज्ज्ञेयो जात्योऽभिनिहितः प्र-
चः ॥ यथा धान्यं कन्या इव व्वेदोऽसीति तथोऽप्य-
पि ॥ ८१ ॥ व्वत्सरोऽसि भवेत्तद्वद्वाज्ज्यर्व्वांस्त्र स्रुचीव
च ॥ उदात्तस्वरितपरप्रचितस्यापि नित्यशः ॥ ८२ ॥
भवेन्नीचतरादेशो वैय्याकरणसम्मतः ॥ स्वरिताद्वा-
ऽनुदात्ताद्वा उदात्तो दृश्यते यदि ॥ ८३॥ शून्यं प्रचाल-
येद्ध्रस्वं स्वरितात्स्वरितेऽपि च ॥ शून्यं प्रचालयेद्ध्रस्वं य-
दुक्तं केन चित्क्वचित् ॥ ८४ ॥ तत्क्वातीयविरोधी स्या-
त्सम्प्रदायविरोधकृत् ॥ उक्तं च याज्ञवल्क्येन मन्त्रे वा-
जसनेयके ॥ ८५ ॥ स्वर उच्चः स्वरो नीचः स्वरः स्वरित-
एव च ॥ स्वरप्रधाने त्रैस्वर्य्यँ व्यञ्जनं तेन सस्वरम् ॥
८६ ॥ मणिवद्व्यञ्जनान्याहुः सूत्रवत्स्वर इष्यते ॥ व्य-
ञ्जनान्यनुवर्त्तन्ते यत्र तिष्ठति सस्वरः ॥ ८७ ॥ वर्णेषू-
च्चार्य्यमाणेषु विकाराः स्युस्त्रयस्तनोः ॥ आयाममार्द्दवौ
चोभौ तृतीयश्चाभिघातकः ॥ ८८ ॥ गात्रस्योच्चमध-
स्तिर्य्यग्गमनं स्याद्यतः क्रमात् ॥ तत्रोदात्तेऽनुदात्ते च

स्वरिते च प्रकीर्त्तितम् ॥ ८९ ॥ उभयवांश्च स्वरित एकीभावेऽन्ययोर्भवेत् ॥ यथा पत्थ्येव चम्वीव ब्रह्माऽस्त्व्यत स्त्यवे ॥ ९० ॥ अथोदात्तोनुदात्तस्य स्वरितस्यापि सङ्क्रमे ॥ उदात्त एको भवति षट् प्रकारः स नान्यथा ॥ ९१ ॥ द्वयोस्तु स्वरयोस्सन्धावेकीभावो यदा भवेत् ॥ तदा नीचोऽप्युदात्तस्य वशं गच्छति सान्वयः ॥ ९२ ॥ उदात्तयोरथैकत्वे भवेदुदात्तएव च ॥ स पुरस्तात्परस्ताद्वा यथा स्यात्प्राप्नयत्त्विति ॥ ९३ ॥ एमे तन्नैजति परं त्विषस्वाभ्यस्त्वा पुनस्तथा ॥ नाभिरस्याथ मेऽङ्गानि जयन्तन्त्वां तथैव च ॥ ९४ ॥ पाप्मानोऽति देवाऽगात्पूर्व्वोऽगाद्बर्हिराऽसदत् ॥ आऽवहा माऽदधुराश्चाद्वियादेवं निदर्शनम् ॥ ९५ ॥ अस्यापवादरूपं यदुदाहरणमुच्यते ॥ आख्यातानां प्रयोगेषु पूर्वं पदमुपस्थितम् ॥ ९६ ॥ षोडशाक्षरपर्यन्तं तद्योगि स्वरमुद्धरेत् ॥ याँ २ ॥ ऽ आऽवहो यदावद्भ्यो नः पिता तथाऽपरम् ॥ ९७ ॥ यत्पुरुषं व्यदधुश्च विद्यादेवं निदर्शनम् ॥ जात्यपूर्वोदात्तपरो ह्युक्तो भवति नित्यशः ॥ ९८ ॥ यथाऽद्भ्यस्त्वयेऽवसेऽपि स्यात् ज्ञातव्यं स्वरवेदिभिः ॥ स्वर्व्योम स्वरितपरोदात्तपूर्वो यथा भवेत् ॥ ९९ ॥ स्वरितोदात्तयोः सन्धावुदात्तो बलवान्स्मृतः ॥ हित्वाऽभिनिहितक्षैप्रप्रश्लिष्टांस्त्रीनिमान्स्वरा-

त् ॥ १०० ॥ व्यीदृश्यानुदात्तपूर्वोदात्तपरो यथा भवेत् ॥ स्कन्ध्यीय स्वरितपरोदात्तपूर्व्वः पदे यथा ॥ १०१ ॥ सर्वतोच्चो ऽभिनिहितः प्रश्लिष्टस्तदनन्तरम् ॥ ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ ॥ १०२ ॥ ततो मृदुतरः स्वारस्तैरोव्यञ्जन उच्यते ॥ पादवृत्तो मृदुतरस्त्वेतत्स्वारबलाबलम् ॥ १०३॥ द्वयोस्तु स्वरयोर्मध्ये स्वरितः स्यात्परो यदि ॥ उदात्तस्यान्यथीभावे प्रोच्यते त्र्यम्बकं यथा ॥ १०४ ॥ योऽशाङ्क्विन्द्र व्रीळ्हु कोऽन्नः सर्प्पिंस्तथाऽपरः॥ नियमः स्वरसन्धेस्तु समाप्तो विदुषां प्रियः॥१०५॥अथाऽतः संस्कारविधिः कथ्यते यो मयाऽधुना ॥ लोपागमौ विकारश्च प्रकृत्या भवनं तथा ॥ १०६ ॥ ज्ञातव्यो निपुणैरेवं संस्कारोऽसौ चतुर्विधः ॥ स्वरयोर्वा हलोर्वाऽपि स्वरव्यञ्जनयोस्तथा ॥१०७॥ ते नोऽवन्त्वव देवासऽएदमापोऽअपान्नपात् ॥ देवानऽआयुः प्र्याङ्क्सोमस्तन्नश्चिकित्वान्त्वं यथा ॥ १०८ ॥ प्रथमात्तु हकारोऽयं तच्चतुर्थत्वमाप्नुयात् ॥ उद्धर्षयावाड्ढव्यानि संग्रमेवं निदर्शनम् ॥ १०९ ॥ आद्यः स्वरे तृतीयत्वं घोषवत्सु त्वपञ्चमः ॥ अघोषे प्रथमत्वं वा उद्देनं युङ्ग्धामे अपि ॥ ११० ॥ पदान्ताः प्रथमा वर्णाः परतः स्वरघोषिणोः ॥ भजन्ते स्वतृतीयत्वं स्वोत्तमत्वं यथोत्तमे ॥ १११ ॥ आद्योत्तमाः पदान्तीयास्स्ववर्गं प-

नम् ॥ ११२ ॥ कखयोः परयोर्न्नित्यं पफयोः परयोर-
पि ॥ विसर्गस्य यदुक्तन्तन्नद्वयान्नात्र सिद्ध्यति ॥ ११३ ॥
मयि वः कामधरणं ततः खनेम चाऽप्यथ ॥ अग्निः
पशुर्य्याः फलिनीर्विद्यादेवं निदर्शनम् ॥ ११४ ॥ अ-
स्वनिष्परसमरीर्द्योऽप्यता च वसुष्कविः ॥ आविष्कृ-
णुष्वेत तथा परो वो ऽसतिष्कृता ॥ ११५ ॥ एव मा-
दौ विसर्गस्य षत्वमिच्छन्ति सूरयः ॥ पूर्वोक्तस्यापवा-
दोऽयं ज्ञातव्यः कृतबुद्धिभिः ॥ ११६ ॥ करत्योपधः स-
कारः स्याद्भाव्युधः ष एव च ॥ अघोषे घोषवति तु लो-
पो रेफो यथाक्रमम् ॥ ११७ ॥ इडस्पदे ळायास्पदं
ज्योतिष्कृदिष्कृतिस्तथा ॥ तत्र ऽइङ्कोऽग्रत्सा मा
ऽहिर्हीतिर्न्निदर्शनम् ॥ ११८ ॥ भाव्युधः षत्वमेति व-
र्जयित्वा कृपीस्कृधिम् ॥ प्रत्ययस्य सवर्णत्वं यातीति
शाकटायनः ॥ ११९ ॥ अविकारं च शाकल्यो मन्यते
शषसेषु च ॥ आशुः शिशानो वृषभो देवोवः सवि-
ता तथा ॥ १२० ॥ अदितिः षोडशेत्यादिर्विज्ञेयोदा-
हृतिर्विदा ॥ पदान्ताः प्रथमा वर्णाः शषसेषु परेषु
तान् ॥ १२१ ॥ शौनको द्वितीयानिच्छेत्प्रकृत्या शा-
कटायनः ॥ असमानस्थलस्थाश्चेच्छौनकोऽपि वदेत्तदा ॥
१२२ ॥ सम्यक्स्रवन्ती वट्सूर्य्यौनुष्टुप्सारद्यापरम्॥

तत्सवितुश्च तत्सत्यन्द्वितीयं नात्र कर्हिचित् ॥ १२३ ॥
असस्थानस्थितत्त्वाच्च तैलानां तु न तन्मतम् ॥ पदान्तस्य
तवर्गस्य चवर्गे परतः स्थिते ॥ १२४ ॥ चवर्गः स्यात्त-
कारस्य चछयोः शागमः स्मृतः ॥ शकारश्छत्वमाप्नोति
तवर्गात्स्पर्शवर्जितः ॥ १२५ ॥ तस्मच्चुरुज्जिह्वानाश्च
तच्छ्रेयमतः परम् ॥ बृहच्छोचा यविष्ठ्येति वाजाञ्ज-
यत्त्वशापरन् ॥ १२६ ॥ तकारस्य पदान्तस्य शकारे
परतः स्थिते ॥ चवर्गपञ्चमत्वं स्यान्नच्छादेशे तु शाग-
मः ॥ १२७ ॥ स्वधावाञ्छुक्रः पिशङ्गाञ्छिशिरायेति
वै तथा ॥ आदित्याञ्छ्मश्रुभिर्नाम छत्वं स्यात्स्पर्शभ-
ङ्गया ॥ १२८ ॥ दधन्वान्स्वनान्यकारे नकारो लो-
पमाप्नुयात् ॥ पीवोऽअन्नान् रयिवृधे परे वाऽपि तथा
पुनः ॥ १२९ ॥ स्वराणामानुनासिक्यं प्रतिजानन्ति
सर्वतः ॥ वर्जयित्वा तमाकारं(१) मकारो यत्र लुप्यते ॥
१३० ॥ उपधारञ्जनं कुर्यात्स्वरे विकरणे सति ॥ लो-
पे प्रकृतिभावे च नोपधारञ्जनं भवेत् ॥ १३१ ॥ प-
दान्तस्थो नकारो यः सोऽनुनासिकपूर्वकः ॥ लकारे
लत्वमाप्नोति शसत्वं चतकारयोः ॥ १३२ ॥ यथाऽ-
स्मिँल्लोके चीँल्लोकान्हीँश्च सर्वानच्युत ॥ गवयाँस्त्वष्टे प-
शूँस्ताँश्चक्रे चैव निदर्शनम् ॥ १३३ ॥ स्पर्शे परे नका-

(१) यत्र लोपो विधीयते । इति 'ग'पुस्तकपाठः ॥

रस्य विकारो नोपलभ्यते ॥ चतौ विहाय तत्राऽपि प्र-
कृत्या भवनं क्वचित् ॥ १३४ ॥ यथाऽस्मिन्गोष्ठेऽक्रन्क-
र्म्म देवान्दिवमथापरम् ॥ पशून्पाहीति जानीयान्न-
कारस्यैकरूपताम् ॥ १३५ ॥ धामन्ते पतयिष्णवश्वं-
श्चून्ताढि तथाऽपरम् ॥ मित्र मह भिन्द्धि किल्वान्वृषन्त्व
व्रते तथा ॥ १३६ ॥ मदन्तमानां च मधुन्तमानां
तद्धिते तमे ॥ निर्जगन्वान्तमसि च न विकारो भवे-
दिह ॥ १३७ ॥ एते निपातसिद्धत्वान्न विकारमवा-
प्नुयुः ॥ नून्पकारे विसर्गत्वमुपधारञ्जनं लभेत् ॥
१३८ ॥ ग्रन्थ्रून्कतून्वनस्पतीन्परिधीँश्च चतुर्थकम् ॥ स्व-
रे रेफत्वमाप्नोति नासिक्यं चोपधा तथा ॥ १३९ ॥ अ-
नुस्वारश्च रोष्मसु मकारस्येति यो विधिः ॥ पदयो-
रन्तरे सः स्यात्पदमध्ये तु नस्य च ॥ १४० ॥ यथाऽपा-
ᳯ रसं चैव त्वाᳯ ग्रभ्णन्त्वाऽएव च ॥ यजूᳯषि तपूᳯषि-
ऊर्ठ᳭ं हीति निदर्शनम् ॥ १४१ ॥ पदान्तीयमकारस्य
त्वन्तस्थाः परतो यदि ॥ नासिक्यमुपधापूर्वं सोऽन्त-
स्थात्वमवाप्नुयात् ॥ १४२ ॥ सँय्यौमि संव्वपामीति तँ-
ल्लोकं च यथा भवेत् ॥ अपदान्तस्य रेफे न यद्यस्मोऽ-
भितिसर्प्पति ॥ १४३ ॥ एकमात्रो द्विमात्रः स्यात्त्रिमा-
त्रान्मात्रिको यथा ॥ त्वर्ठ᳭ं सोम हवीᳯषि सᳯस्रष्टा
न संय्युजि ॥ १४४ ॥ अनुस्वारो द्विमात्रः स्याद्वर्णो

व्यञ्जनोदयः ॥ ह्रस्वाद्वा यदि वा दीर्घाद्देवानाङ्०
हृदये यथा ॥ १४५ ॥ मकारः प्रत्यये स्पर्शभवेत्तद्व-
र्गपञ्चमः ॥ ब्रजङ्गच्छ व्रतञ्चरिष्यामि प्राङस्तथा
पुनः ॥ १४६ ॥ एतन्त्वेदमिदंत्वथ्यस्य यच्छन्ताम्पञ्च वै य-
था ॥ संयोगादिः स्वराद्द्वित्वं प्राप्नोतीति विदुर्बुधाः ॥
१४७ ॥ तत्पदान्तपदाद्योर्वा पदमध्येऽपि सर्वतः ॥
सम्यक्स्रवन्ति सरितः सन्धौ तु पदयोर्य्यथा ॥ १४८॥
अनुष्टुप्शारदी तद्वत्प्रथमस्तु द्विकक्तिजः ॥ मध्येऽश्व-
स्तूपरो यद्वदश्वस्य क्त्वा तथाऽपरम् ॥ १४९ ॥ अस्वरा-
न्न भवत्येतत् अग्नि मुत्कर्संवद्यथा ॥ परं रेफहका-
राभ्यां व्यञ्जनं तूष्मवर्ज्जितम् ॥ १५० ॥ द्वित्वमाप-
द्यते रेफहकारौ तु न कुत्र चित् ॥ यथा सूर्य्योऽथ
सर्व्वेभ्यो बाह्वोर्गृह्णामि चैव हि ॥ १५१ ॥ ऊष्माणो
रेफसङ्क्रान्ता न द्विः स्युस्तत्स्वरोदयाः ॥ यथाऽर्शसदुप-
चितां व्वर्षो व्वर्षीयसीति च ॥ १५२ ॥ सहस्रशीर्षा पु-
रुषो देवर्ब्बर्हिर्य्यथा स्मृतम् ॥ अन्तस्स्थाभिर्य्यदा युक्ता
ऊष्माणो रेफपूर्व्वकाः ॥ १५३ ॥ व्वर्ष्यीय चान्तः पा-
र्श्वव्यञ्च रेफाद्द्वित्वं भजन्ति ते ॥ ऊष्मान्तस्स्थापरः
स्पर्शो द्वित्वमापद्यते यथा ॥ १५४ ॥ अप्सुमन्तूर्जं स-
स्नितमं धिष्ण्यया राष्ट्रं च गृह्णते ॥ यकारात्स्पर्श-
सँय्योगो नोपलभ्येत कुत्र चित् ॥ १५५ ॥ प्रत्स्मित-

स्य दधिक्राव्णः पुरुराव्णस्तथैव च ॥ यदि चास्वरपू-
र्व्वाः स्युरूष्माणस्तस्या न तत्परः ॥ १५६ ॥ स्पर्शो
द्वित्त्वमवाप्नोति स्थालीभिर्द्दिवः स्कम्भनीः ॥ यत्र चो-
भयतः स्पर्शैः संयुक्ताः प्रथमाः सदा ॥ १५७ ॥ तत्र
नाद्यः क्रमो ज्ञेयो नापरो बोधितो बुधैः ॥ पच्छ्मा-
णि वाऽथ सुच्छ्मा च विश्पत्न्या च तथा पुनः ॥
१५८ ॥ नेदृशेषु द्विरुक्तिः स्यादिति प्राज्ञमनीषिणः ॥
जिह्वामूलीयतः स्पर्श उपध्मानीयतस्तथा ॥ १५९ ॥
सऽ्द्दधानो व्वसुष्क्कविर्द्धौष्प्पतेत्यादिकंय्यथा ॥ विस-
र्ज्जनीयाच्च परो यः स्पर्शो व्यञ्जनोदयः ॥ १६० ॥ सो-
ऽपि द्वित्त्वमवाप्नोति युञ्जानः प्प्रथमंय्यथा ॥ सकारस्य
द्विरुक्तिर्य्या सा द्वयोरेव नान्यतः ॥ १६१ ॥ आ च पा-
रस्वा च रास्स्वेयत्त्सकारोऽत्र द्विरुक्तितः ॥ ह्रस्वपूर्व्वा ङ-
नौ स्यातां पदान्तौ द्विः स्वरोदयौ ॥ १६२ ॥ युङ्ङसीति
तथा चाप्मन्नूर्ज्जमित्यादिकंय्यथा ॥ प्रथमैस्तु स्ववर्ग्गीयै-
र्द्वितीया द्विर्भवन्ति हि ॥ १६३ ॥ तृतीयैस्तु चतुर्थास्तु व्वि-
कख्यायाजिग्घ्रकंय्यथा ॥ उख्यं सख्यं च मुख्यं च वर्जयि-
त्वा पदत्रयम् ॥ १६४ ॥ ख्याधातोः खययोः स्यातां क-
शौ गार्ग्यमते यथा ॥ व्विकश्याऽऽकशातमित्येतन्माध्यन्दि-
नविरोधकृत् ॥ १६५ ॥ व्विकख्याय कखया युक्तास्तथया

यसँय्युतम् ॥ १६६ ॥ विष्फुरन्ती च षष
स्त्रैवं चतुर्थकाः ॥ आजिघ्रगघरायुक्ता
ड्ढवास्तथा ॥ १६७ ॥ अह्नो दधवाश्चैवं
ड्भरसँय्युतम् ॥ ऋवर्णे न द्विरुक्तिः स्यात्
विहाय च ॥ १६८ ॥ ऌवर्णेऽपि तथैव स्य
चानिष्टतँय्यथा ॥ अवसानस्थितं चापि व्यञ्ज
रुच्यते ॥ १६९ ॥ ऊरुर्क्सूनृता पदे एवं सं
वार्य्यते ॥ स्वरात्परश्छकारस्तु सर्वत्र द्वित्वम
१७० ॥ यस्यातिहाय सह्नेति पदत्रयपरं विर
रुक्तिं वर्ज्जयेन्नित्यं यमेऽपि परतः स्थिते ॥ १
कथ्ना देदिश्यते नारी ककारोऽनेकऽएव नि
परे निषेधस्तु पुनर्द्वित्वनिवारकः ॥ १७२ ॥
पाणिमप्रभृतिप्राज्ञस्तेषां मनीषिणाम् ॥ सँय
पूर्व्वाङ्गं यमस्येति विरोधकृत् ॥ १७३ ॥ व
तत्साधु नत्वन्यत्कल्पनाक्षमम् ॥ अपञ्चमात्
पञ्चमेषु परेषु च ॥ १७४ ॥ यमोत्पत्तिर्भ
क्रमः पाणिमा निदर्शनम् ॥ स्वरात्संय्योगपूर्व्वा
ज्जातो द्वितीयकः ॥ १७५ ॥ तस्यैव
स्यात्पञ्चमैरन्वितो यदि ॥ स्पर्शानां पञ्चमैर्य्यो
रो ये यमाः स्मृताः ॥ १७६ ॥ अयस्मिखण्डेन
घनबन्धाः प्रकीर्त्तिताः ॥ यमास्तदा निवर्त

मध्ये भवेद्यदि ॥ १७७ ॥ ऊर्णापिण्डेन ते तुल्याः पाशैस्तमन्या निदर्शनम् ॥ स्पर्शोऽअपञ्चमा ये च अन्तस्थाभिश्च सँय्युताः ॥ १७८ ॥ दारुपिण्डेन ते तुल्याः सुथबन्धाः प्रकीर्त्तिताः ॥ अपञ्चमे स्ववर्गीये न प्राग्वर्णो द्विरुक्तिभाक् ॥ १७९ ॥ तद्देवानां च यद्देवाऽअन्तरिक्षम्पुरीतता ॥ ईड्यवाड्रीनसावेतावुद्रश्चापि तथैव च ॥ १८० ॥ चरद्दद्रव्यस्य वचनो द्वित्वं नैवात्र विद्यते ॥ जत्रष्टचस्तथा श्वित चित्र सत्र तथैव च ॥१८१॥ यत्र तत्र पदेष्वेषु व्यञ्जनं न द्विरुच्यते ॥ उपोत्थित-मुत्तम्भनमुत्तभानोत्थिताय च ॥ १८२ ॥ उत्थाय बृहती चैषु त्रयः स्पर्शा भवन्ति हि ॥ वर्णं द्विवर्णसँय्योगे-एकवर्णवदुच्यते ॥ १८३ ॥ स्वरमध्ये सजातीये विजातीये द्वयोः श्रुतिः ॥ कुक्कुटोऽसि तथा तन्नऽआवर्ज्यं भुज्युः श्रुतिर्द्वयोः ॥ १८४ ॥ स्पर्शात्परककारस्य स्फोटनं दोषकृन्न वा ॥ अत्राचार्य्याशयाद्द्वित्वं स्फोटनं द्वित्वनाशनम् ॥ १८५ ॥ अयस्पिण्डेन तत्तुल्यं तस्मादुच्चारणं तथा ॥ काण्डात्काण्डाद्वषट्कृतं यत्क्लोमादिकँय्यथा ॥१८६॥ स्ववर्गीयैस्तु सँय्योगः स्पर्शानां सम्भवेद्यदि ॥ तत्पूर्वस्य श्रुतिर्नास्ति विरामव्यञ्जनस्य च ॥ १८७ ॥ द्वितीयाश्च चतुर्थाश्च वर्णाः सो-

मुखात् ॥ १८८ ॥ तं धारयेत्प्रयत्नेन घनबन्धं समुच्चरेत् ॥ सक्थ्ना दद्भ्रस्तथा दद्ध्रा अग्घ्न्या इति निदर्शनम् ॥ १८९ ॥ स्वराः सँय्योगपूर्व्वा ये व्यञ्जनान्तास्तथान्तगाः ॥ एषां कालो द्विमात्रः स्यान्न तु दीर्घा हि ते स्मृताः ॥ १९० ॥ यथाऽग्निर्दूर्य्यथा विष्णुः प्रत्यङ् दद्यङ् ऋविस्तुतम् ॥ याहि पाहि रक्ष मधु विद्यादेवं निदर्शनम् ॥ १९१ ॥ व्यञ्जनान्तस्य मोक्षः स्यात्करणस्थानतः पदे ॥ अन्यदन्यप्रयत्नेन पदमारभ्यते बुधैः ॥ १९२ ॥ अन्यथा तु पदादौ च द्वित्वमापद्यते ध्रुवम् ॥ सँय्यामि सँव्वपामीति इमम्मेति निदर्शनम् ॥ १९३ ॥ अर्द्धर्चादेः समाप्तौ च मोक्षणं तु विधीयते ॥ पादश्छन्दोऽनुरोधेन एकद्वित्रिचतुष्पदः ॥ १९४ ॥ अप्यनेकपदैः क्वाऽपि दृश्यते पादपूरणम् ॥ हृदि स्पृशं यथैकस्मिन्पदे स्यात्पादपूरणम् ॥ १९५ ॥ क्रतोर्भद्रस्य द्विपदं क्रतुन्न भद्रमित्यतः ॥ अग्ने त्वन्नोऽअन्तमस्त्र विद्यात्पादचतुर्विधम् ॥ १९६ ॥ विधूमसग्नेऽनेकपदमेवमादिनिदर्शनम् ॥ ङनकारौ पदान्तीयौ मकारे परतः स्थिते ॥ १९७ ॥ कताभ्यां व्यवधीयेते प्राङ्ङ्क्सोमश्च यथा तथा ॥ प्रत्यङ्क्सोमस्तीन्त्समुद्रानस्मान्त्सीते निदर्शनम् ॥१९८॥ "ऋकारे प्रत्यये कण्ठ्यः पाठे ह्रस्वत्वमाप्नुयात् ॥ खाह्यऽऋषभमि-

न्द्रोऽथ विश्वकर्मऽऽऋषिस्तथा ॥ १९९ ॥ येनऽऋषय-ऽइत्यत्र यन्नऽऋषयऽइत्यपि ॥ ह्रस्वे ह्रस्वविधानं यत्त-त्सन्धिविनिवर्त्तकम् ॥ २०० ॥ एओ ऐऔ तु चत्वा-रः क्रमादेव स्वरे परे ॥ अयवायावतां यान्ति इडऽ-एहि कृष्णानुवत् ॥२०१॥ सरस्वत्या ऽअग्रजिह्वं ताऽउ-भौ च यथा क्रमम् ॥ यवयोरत्र लोपः स्यात्स्वरमध्ये पदान्तयोः ॥ २०२ ॥ अयादौ यवयोर्लोपे न पुनः सन्धिरिष्यते ॥ असस्थाने वकारस्य लोपन्नेच्छन्ति सूरयः ॥ २०३ ॥ पादादौ च पदादौ च संयोगावग्र-हेषु च ॥ यः शब्दइति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ २०४ ॥ युक्तेन मनसा यहत्त्वा यामि तथाऽ-परम् ॥ अनूकाशेन बाह्यन्न योगे योगे निदर्शनम् ॥ २०५ ॥ उपसर्गपरो यः स पदादिरपि दृश्यते ॥ ई-षत्स्पृष्टो यथा वि यत्पदच्छेदे परो भवेत् ॥ २०६ ॥ यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् ॥ यत्र यत्र विशेषः स्यादिदानीं स तु कथ्यते ॥ २०७ ॥ वकार-स्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ॥ आदौ गुरुर्लघु-र्मध्ये पदस्यान्ते लघूतरः ॥ २०८ ॥ उपसर्गपरौ यत्र यवकारौ पदादिगौ ॥ ईषत्स्पृष्टौ ततो ज्ञेयावभि यु-ध्य उपा यथा ॥ २०९ ॥ परि वाजपतिः कविः प्रवो-चं च निदर्शनम् ॥ अनु योजान्विन्द्र ते तु उपयुञ्जं-

ब्विना तथा ॥ २१० ॥ त्वदर्थवाचिनौ वो वाँब्वा वै य-
दि निपातजौ ॥ आदेशाश्च विकल्पास्स्युरीषत्स्पृष्टा
ह्रि ते स्मृताः ॥ २११ ॥ देवो वः सविता या वाँब्वातो
वाऽथ तथा न वै ॥ तव व्वायश्चतस्पतेऽस्ति वान्वा निद-
र्शनम् ॥ २१२ ॥ द्वयीभावे समुत्पन्ने लक्षणान्निर्ण-
यो भवेत् ॥ लक्षणँब्वाऽविनाशि स्यात्सम्प्रदायोऽविना-
शवान् ॥ २१३ ॥ प्रमाणानुगतं वाक्यं यो मोहाद्धातु
मिच्छति ॥ प्रतिवातं स मूढात्मा पांसुं प्रक्षिपति स्व-
यम् ॥ २१४ ॥ कण्ठ्या वर्णोऽग्निदैवत्यास्तालव्याः
सोमदेवताः ॥ जिह्वामूलीया नैर्ऋत्या रौद्रा दन्त्याः
प्रकीर्त्तिताः ॥ २१५ ॥ ओष्ठ्याश्चैवाश्विना ज्ञेया वाय-
व्या मूर्द्धसम्भवाः ॥ शेषास्तु वैश्वदेवाः स्युरिति कात्या-
यनोऽब्रवीत् ॥ २१६ ॥ क्रियावाचकमाख्यातमुपसर्गो
विशेषकृत् ॥ सत्त्वाभिधायकं नाम निपातः पादपूर-
णः ॥ २१७ ॥ भारद्वाजकमाख्यातं भार्गवं नाम भाष्य-
ते ॥ वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः ॥
२१८ ॥ सर्व्वन्तु सौम्यमाख्यातं नाम वायव्यमिष्यते ॥
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥ २१९ ॥
स्वरास्तु ब्रह्मणा ज्ञेया वर्गाणां प्रथमाश्च ये ॥ द्विती-
याश्च तृतीयाश्च चतुर्थाश्चापि भूमिपाः ॥ २२० ॥ उदात्तं
ब्राह्मणं विद्याद्भारद्वाज ऋषिस्ततः ॥ गायत्रं च भवेच्छ-

न्दो नियोगो ब्रह्मसाधने ॥ २२१ ॥ नीचं तु क्षत्रि-
यं प्राहुर्गौतमोऽस्य च देवता ॥ छन्दस्त्रैष्टुभमेवास्य
विनियोगोऽघनाशने ॥ २२२ ॥ स्वरितं वैश्यमेवाहु-
र्मुनिर्गार्ग्योऽस्यकीर्त्तितम् ॥ जागतं तु भवेच्छन्दो नि-
योगः शत्रुनाशने ॥ २२३ ॥ एषा मन्त्ररहस्यस्य मञ्जूषो-
द्घाटिता मया ॥ एतत्सर्व्वं विदित्वा तु ब्रह्मलोके महीे-
यते ॥ २२४ ॥ अनेन विधिना वेदं योऽधीते श्रद्धया
द्विजः ॥ सोऽश्वमेधसहस्रस्य फलं प्राप्नोति पुष्कलम् ॥
२२५ ॥ रहस्यं यो न जानाति लक्षणं चार्षकादिक-
म् ॥ सोऽध्यापने न योग्यः स्याज्जपहोमादिकर्म्मसु ॥
२२६ ॥ अमरेशकृतामेतां शिक्षां यो धारयेत्सुधीः ॥
विद्वज्जनसभामध्ये जयं स लभते ध्रुवम् ॥ २२७ ॥ इ-
त्यमरेशकृता वर्णरत्नप्रदीपिकाशिक्षा समाप्ता ॥

अथ केशवदैवज्ञविरचिता ना
ज्ञात्मिका व्याख्यानोदाहरण
ऽऽरभ्यते ॥ अथातः केशवी
क्षां व्याख्यास्यामः ॥

---

नत्वा गणपतिं देवं परिभाषाङ्कसूत्रकम्
च्यते केशवेनेदं वेदाध्यायिसुखाप्तये ॥ १ ॥
माध्यन्दिनीयपरिभाषा ॥ अङ्कानां नवानां
णां मध्ये येन सूत्रेण पदादिमध्यान्तवर्णेषु सञ्ज्
यते तद्विना पदादिवर्णेष्वेव सञ्ज्ञा न जायते
च्यते ॥

पदादौ पूर्व्वादल्व्वोर्द्व्योर्च्चार
मपूर्व्वयोश्छन्दसि ॥१॥

माध्यन्दिनीये पदादौ आद्यहल्विहीनयोर्व
कारयोः सम्पूर्वयोश्चाप्यनयोः क्रमाद्द्वित्ववका
रोच्चारः स्याच्छन्दसि ॥ हल् इति व्यञ्जनम् । अस्
रणानि संहितायाः प्रथमाध्याये प्रथमकण्
वायवस्थऽइत्यत्र व्वायवइत्युच्चारः । तथैव द्विती

कायां वसोः पवित्रमित्यत्र व्वसोः पवित्रमित्युच्चारः । प्रथमर्चि यजमानस्येत्यत्र य़जमानस्येत्युच्चारः। द्वितीयर्चि यज्ञपतिरित्यत्र य़ज्ज्ञपतिरित्युच्चारः । कस्त्वा युनक्तीत्यत्र युनक्तीत्युच्चारः । सम्पूर्वकस्योदाहरणानि संहितायाम्प्रथमाध्याये देवस्य त्वेत्यङ्मध्ये संवपामीत्यत्र सँव्वपामीत्युच्चारः। संवर्चसेत्यत्र सँव्वर्चसेत्युच्चारः । जनयत्यै त्वा संयौमीत्यत्र सँय्यौमीत्युच्चारः । संयज्ञपतिरित्यत्र सँय्य़ज्ज्ञपतिरित्युच्चारः । इत्यादिषु पदादित्वात्सम्पूर्वत्वाच्च यवयोर्द्वित्ववकारयकारौस्तः । न वयकारौ इत्यादि सर्वत्र ज्ञेयम् । पदादाविति किम् । आद्यकण्डिकायां प्रजावतीरनमीवाः । प्राप्यैयत्र श्रेष्ठतमायेत्यादिषु वकारमकारयोः पदादित्वाभावान्न द्वित्ववकारयकारौ स्तइति । आद्यहलविहीनयोरिति किम् । द्वितीयाध्याये 'अग्ने व्वाजजिद्वाजन्त्वा । तृतीयाध्याये अव रुद्रमित्यङ्मध्ये श्रेयसस्करद्यथा न इत्यनयोर्वकारयकारयोः पदादित्वमस्त्यतो द्वित्वजकारोच्चारः । अनयोरुदाहरणयोस्तु आद्यदकारहल्युतत्वान्न द्वित्वजकारोच्चारो न द्वित्ववकारोच्चारश्चेति प्रथमसूत्रव्याख्या जकारोच्चारणार्थमन्यत्सूत्रं च प्रदर्श्यते ॥

पदान्तमध्यगहरेफयुग्यस्य य़श्च ॥ २ ॥

पदान्तमध्ये ऋकारहकाररेफैश्च युक्तस्य यस्य ज
च्चारणं छन्दसि माध्यन्दिनीये । उदाहरणानि
विंशतिमेऽध्याये प्रथमा द्वितीयैरित्येकादशकण्डिका
सामान्यृग्भिः । द्वितीयाध्याये यम्परिधिमित्यृङ्म
पणिभिर्गुह्यमानइत्यत्र हकारजकारयुक्तोच्चारः ।
दोऽसि येनेतिकण्डिकायां मह्यँव्वेदो भूयाः । घृ
चीस्त्यो भुर्व्यौ । तृतीयाध्याये उपत्वेत्यृङ्मध्ये घृ
चीर्य्यन्तु हर्य्यत इत्यादिषु ऋकारहकाररेफयुक्ता
ज्जकारोच्चारो न यकारः । ऋहरेफयुक्तस्येति किं
अभिषिञ्चन्त्युत्सिञ्चन्ति । अत्र न जकारोच्चारः ।
तः ऋहरेफयुक्तत्वाभावात् । एवमन्यत्रापि बोध्य
इति द्वितीयसूत्रव्याख्या । सूत्रद्वयार्थे कारिकाऽ
पूर्वोक्तलब्धोः पदादौ च वेदे सम्पूर्वयोर्द्विजौ ॥ यस्
रेफयुक्तस्य जः पदाद्यन्तमध्यके ॥

षः खष्टुमृते च ॥ २ ॥

पदान्तमध्ये षकारस्य खकारोच्चारस्स्याट्टवर्गं
णा छन्दसि माध्यन्दिनीये । उदाहरणानि । इषे
ऊर्जेत्वेत्यत्र खकारोच्चारो न षकारः । एवं
ह्मणेऽपि "इयं पृथिवी सर्वेषां भूतानामित्यत्र क
यखकारसदृशोच्चारो न मूर्द्धन्यषकारइति । टवर्गे
नेति किम् । आद्ये ऋचि "श्रेष्ठतमाय कर्म्मणे" इ

टवर्गयुक्तत्वात्षकारोच्चारएव न खकारोच्चारइत्या-
दि सर्वत्र ज्ञेयम् ॥ इति तृतीयसूत्रं व्याख्यातम् ॥

## अहल्शल्यूर्ध्वरेफस्य सैकारः प्राक्च ॥ ४ ॥

पदान्तमध्ये हलिवर्ज्जीनशल्यूर्ध्वरेफस्य सैकारः प्रा-
गुच्चारश्छन्दसि माध्यन्दिनीये ॥ शलिति शषसहा
ज्ञेयाः । उदाहरणानि यथा । अष्टत्रिंशदध्याये सप्तद-
शकण्डिकायां अभीमं महिमा दिवमित्यत्र दर्शतमि-
त्यूर्ध्वरेफस्य प्रागेव सैकारोच्चारः । दरेशतमिति न तु
सोर्ध्वरेफोच्चारः । एकोनचत्वारिंशदध्याये अग्निर्ट०
हृदयेनागनिमित्यृङ्मध्ये पर्शव्येनेत्यत्र परेशव्येनेत्यु-
च्चारः ॥ पञ्चमाध्याये "वाम्रा" इति वाण्डिकायां
शतवल्शो विरोह सहस्रवल्शा इत्यत्रापि रलयोः सा-
वर्ण्याल्लस्यापि प्राक्सैकारोच्चारः, शतवलेशो विरोह
सहस्रवलेशा इति न लकारयुक्तोच्चारः । वसोः पवित्रम
सीति कण्डिकायां ह्वार्षीत् अत्रापि प्राक्सैकारोच्चा-
रः ह्वारेषीत् । षकारस्योदाहरणमेव सकारस्य तत्क-
थं "आदेशप्रत्ययोः" । इण्कवर्गाभ्यां परस्य मूर्द्ध-
न्यादेशइति कृत्वा रेफस्तु इणमध्ये वर्त्तते तर्हि रेफा-
त्परो यः सकारः स मूर्द्धन्यएवेति कृत्वा षकारसकार-

योरेकमेवोदाहरणम् । आर्ष्यां संहितायां तृतीयाध्याये प्रथमर्चि बर्हिषे त्वा बर्हिरसीत्यनयोर्बरेहिषे त्वा बरेहिरसीत्येवमेवोच्चारो न तु सोर्ध्वरेफोच्चारः । त्रयोविंशत्यध्याये "केष्वन्त इत्यङ्मध्ये "एतद्ब्रह्मन्नुपवल्हामसीत्यत्र वलेहामसीत्युच्चारो रलयोः सावर्ण्यात् एवमादीनि ज्ञेयानि । हलिवहीनेति किम् । वसोः पवित्रमसीति कण्डिकायां "यज्ञपतिह्वार्षीत् ॥ एकत्रिंशदध्याये नाभ्या ऽआसीदन्तरिक्षꣳ शीर्ष्णोद्यौरित्यत्र हकारषकारयोर्वकारणकारहल्युक्तत्वाद्रूर्द्ध्वरेफयुक्तएवोच्चारो न प्राक्सैकारोच्चार इति। शलीति किम्। इषे त्वोर्ज्जे त्वा प्रार्प्पयतु इत्यत्र शलिवहीनत्वात्सोर्ध्वरेफोच्चारो न प्राक्सैकारोच्चारइत्यादि सर्वत्र ज्ञेयम् । इति चतुर्थसूत्रव्याख्या । एतदर्थे कारिकाऽपि । षस्योच्चारः खकारः स्याट्टुं विना छन्दसि स्वके ॥ विहलशल्यूर्ध्वरेफो यः सैकारः प्राक्समुच्चरेत् ॥ ४ ॥

## अनुस्वारस्य ꣳ शलि रेफे च परे ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः सँय्योगे गुरुश्च ॥ ५ ॥

पदान्तमध्ये शलि रेफे च परे अनुस्वारस्य ꣳ स्याद्ध्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः संयोगे च परे गुरुः स्याच्छ-

न्दसि माध्यन्दिनीये। उदाहरणानि यथा । त्रिꣳ॰श-द्धामेति । ब्राह्मणोऽपि सर्वꣳ॰ षडिति । द्वितीयाध्याये अग्ने गृहपतऽइति कण्डिकायां भूयासꣳ॰ सुगृहपतिः । तस्यामेव शतꣳ॰ हिमाः । तृतीयाध्याये सन्त्वमग्नऽइति कण्डिकायां सम्प्रजया सꣳ॰ रायस्पोषेणेति । प्रथमाध्याये पृथिवि देवयजन्योषध्यास्तऽइत्यृङ्मध्ये पृथिव्याꣳ शतेन पाशैः । द्वादशाध्याये सुपर्णोसीति कण्डिकायां यजूꣳषि नाम । द्वितीयाध्याये एषा तऽइत्यृङ्मध्ये ससृवाꣳसꣳ वाजजितम् । सम्बर्हिरङ्क्ताꣳ हविषा । तृतीयाध्याये उभा वामिति कण्डिकायां इषाꣳ रयीणाम् । एकविंशत्यध्याये होता यक्षत्सुरेतसमृषभमित्यृङ्मध्ये सुरया भेषजꣳ श्रिया न मासरम् । अष्टादशाध्याये आयुर्यज्ञेनेत्यृङ्मध्ये कल्पताꣳ श्रोत्रँय्यज्ञेन कल्पताम् । एकादशाध्याये दꣳष्ट्राभ्याम्मलिम्लून । एकोनविंशतितमेऽध्याये पुरोडाशैर्हवीꣳष्या । तृतीयाध्याये सोमानꣳ स्वरणम् । सन्त्वमग्नऽइत्यृङ्मध्ये सम्भूषीणाꣳ सुतेन । पञ्चमाध्याये सिꣳह्यसि । एवं रेफसँय्योगे परे ज्ञेयम् । इत्यादिषु क्रमेण दीर्घह्रस्वगुरूस्वाराः कर्त्तव्या न व्यस्ताइति । शलि रेफे च परे किम् । इन्द्राय भागं प्रजावतीरित्यनयोरनुस्वारस्याग्रे शल्रेफाभावादनुस्वार ए-

व न ठं॰कारइति पञ्चमसूत्रं व्याख्यातम्। सूत्रार्थे कारिकाऽपि। अनुस्वारस्य ठं॰ वेदे शलि रेफे परे भवेत्॥
ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः सँय्योगे च परे गुरुः॥ ५॥

शर्पूर्वाणामृद्धीनकादिपञ्चवर्गाणां द्वित्वं विसर्गाद्रेफयुक्तानाम्॥ ६॥

पदान्तमध्ये शर्पूर्वाणां ऋकारहीनकादिपञ्चवर्गाणां विसर्गात्परेषां रेफयुक्तानामेषां च द्वित्वं स्याच्छन्दसि माध्यन्दिनीये॥ शर् इति शषसा ज्ञेयाः। उदाहरणानि यथा। द्वितीयाध्याये अस्कन्नमद्य देवेभ्यः। आधत्तेति मध्ये पुष्कारस्रजम्। समिदसीत्यङ्मध्ये कस्याश्चिदभिशस्त्यै। कृष्णोऽस्याखरेष्ठः। सूर्य्यस्त्वा पुरस्तात्पातु। उपहूतो द्यौष्पितोपमाम्। मयीदमित्यङ्मध्ये दधात्वस्मान् इत्यादिषु कादिपञ्चवर्गाणामेव द्वित्वं शर्य्युतत्त्वान्न शषसानां विसर्गाद्रेफयुक्तानामुदाहरणानि यम्परिधिमित्यस्यामृचि मध्ये अग्नेः प्रियमस्या अग्निमकण्डिकायां बृहन्तः प्रस्तरेष्ठाः। तृतीयाध्याये आ नऽएतु मनः पुनः क्रत्वे दक्षाय जीवसे। ऋकारहीनत्वादिति किम्। तृतीयाध्यायेऽष्टादशकण्डिकायां व्ययस्कृतं सहस्कृतम्। चतु-

र्विंशत्यध्याये द्वितीयकण्डिकायां बार्हस्पत्यः पृषती-
ति द्वितीयाध्याये द्वितीयर्च्चि ऊर्ध्वमस्मदसन्वा स्तृणामी
त्यत्र ककारपकारतकाराणां ऋकारयुक्तत्वान्न द्वि-
त्वमित्यादि ज्ञेयम्। एतदर्थं कारिकापि। वृकादयः
पञ्चवर्गाः अपूर्वा गुरवश्च ते॥ विसर्गाश्च परे तद्व-
युक्ताश्छन्दसि स्मृताः॥ ६॥ प्रयादिज्ञापनार्थं प्रत्या-
हारसूत्राणि लिख्यन्ते। तथा च। अइउण्। ऋ-
लृक्। एओङ्। ऐऔच्। हयवरट्। लण् अमङ-
णनम्। झभञ्। घढधष्। जबगडदश्। खफछठ-
थचटतव्। कपय्। शषसर्। हल्। इति माहेश्वरा-
णि सूत्राण्यणादिसञ्ज्ञार्थानि। एषामन्त्या इतः।
हलन्त्यम्। उपदेशेऽन्त्यं हलित्स्यात्। आदिरन्त्येन
सहेता। अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य
च सञ्ज्ञा स्यात्। यथाऽणिति अइउवर्णानां सञ्ज्ञा।
एवमच् हल् अलित्यादयः प्रत्याहारा ज्ञेयाः। कस्य
वर्णस्य पुनः किं स्थानमित्यपेक्षायामाह। अकुहवि-
सर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषा-
णां मूर्द्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामो-
ष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु।

इति जिह्वामूलीयः। ॅ पइत्युपध्मानीयः। अं इत्यनुस्वारः। अः इति विसर्जनीयः इति ज्ञेयम्। पाणिनीयसूत्रे अपि द्वित्वविधायके भवतः। तथाहि। अनचि च। अचः परस्य यरो द्वे वा स्तो न त्वचि। अचो रहाभ्यां द्वे॥ अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वास्तः। पाणिनीयद्वित्वसूत्रद्वयोदाहरणानि प्रथमाध्याये द्वितीयर्चि पृथिव्यसि मातरिश्वनो घर्म्मोऽसि विश्वधाऽअसि। इत्थं हस्व माह्वाम्मी ते इत्यादि सर्वत्र ज्ञेयम्। इति षष्ठसूत्रव्याख्यानम्। एतदर्थं कारिकाद्वयमपि। पाणिनीयस्य सूत्राभ्यां द्वित्वं सर्वत्र कीर्त्तितम्। नटं विना कादयः पञ्च यपूर्व्वा द्वित्वमाप्नुयुः॥ ७॥ विसर्गाच्च परे ते रेफयुक्ताश्छन्दसि स्मृताः॥ पाणिनीयप्रातिशाख्यसूत्रैर्द्वित्वं प्रकीर्त्तितम्॥ ८॥

## न सोऽयोऽश्च॥ ७॥

पदान्तमध्ये वकारयकारयोः परयोः सकारस्य द्वित्वं न स्याच्छन्दसि माध्यन्दिनीये। उदाहरणानि यथा। द्वितीयाध्याये द्वितीयर्चि स्तृणामि स्वासस्थाम्भुवपतये स्वाहा। प्रथमाध्याये घर्म्मास्यवधूतं रक्षः। धृष्टिरस्यपाग्ने इत्यादिषु सकारस्य यवयोः परयोर्न्न द्वित्वम् एवं सर्वत्र ज्ञेयम्। इति सप्तमसूत्र

## हल्युतायुतस्यो: सैकारश्च ॥ ८ ॥

पदान्तमध्ये हल्युतायुतस्य ऋकारस्य ऋवर्णस्य सैकारइवोच्चार: स्याच्छन्दसि माध्यन्दिनीये । उदाहरणानि यथा द्वितीयेऽध्याये कृष्णोऽसीत्यत्र क्रिष्णोऽसीत्युच्चारो न ऋकार: । अग्नये इत्यृङ्मध्ये पितृमते इत्यत्र पित्रे मते स्वाहेत्युच्चार: । तृतीयाध्याये अयन्ते योनिरृत्विय इत्यृङ्मध्ये रेत्विय इत्युच्चार इत्यादि सर्वत्र ज्ञेयम् । इत्यष्टमसूत्रव्याख्या सूत्रार्थे कारिकाऽपि । यवयो: परयो: सस्य द्वित्वं न स्यात्तु छन्दसि ॥ ऋकारो हल्वियुग्युग्वा सैकारश्छन्दसि स्मृत: ॥ ६ ॥

## ह्रस्वं किञ्चिद्दीर्घं हल्युताकारे हल्विसर्गयुग्वर्णे च न संहितायाम् ॥ ९ ॥

पदान्तमध्ये च ह्रस्वत्वस्य किञ्चिद्दीर्घोच्चार: स्याद्धल्युतायुत आकारे परे हल्विसर्गयुग्वर्णे च परे न स्याद्वाजसनेयसंहितायाम् । अस्योदाहरणानि यथा संहितायां प्रथमाध्याये प्रथमर्चि इषे त्वोर्जे त्वा वायवस्थ देवो व इत्यादिषु इकारयकारस्याकारा ह-

स्वाः । अत एषां किञ्चिद्दीर्घोच्चारो न तु ह्रस्वता । सविताऽत्र तकारःप्लुत आकारोऽग्रे तिष्ठति । अतः सकारविकारयोर्ह्रस्वतैव । इष्ठं॰हस्व मा ह्वाम्मोते । प्राप्यंयतु । अत्र पकारयकारयोः किंचिद्दीर्घता । श्रेष्ठतमाय अत्र मकारयुतआकारो ऽग्रेस्ति । अतः टकारतकारयोर्ह्रस्वतैव । अत्र यकारस्य किञ्चिद्दीर्घता । कर्म्मण ऽआप्या । अत्र मकारणकारयोर्प्लुता-कारोऽग्रेऽस्ति । अतो ह्रस्वावेव । यद्धमग्न्या अत्र ध्नस्य कीञ्चिद्दीर्घता । इन्द्राय भागं प्रजावतीः अत्र यकारमकारयोरग्रे प्लुत आकारोऽग्रेऽस्ति अतो ह्र-स्वावेव । वस्य किञ्चिद्दीर्घता । रनमीवाऽअयद्मा मा वस्तेनऽईशत इत्यादिषु रेफनकाराकाराणां कि-ञ्चिद्दीर्घोच्चारः । ईशत मा" अत्र प्लुत्तरआकारो-ऽग्रेऽस्ति । अतः शतयोर्ह्रस्वतैव ॥ माऽघशंꣳ सो ध्रुवा ऽअस्मिन्गोपतौ स्यात बह्वीः । अत्र घकारपकारत-काराणां किञ्चिद्दीर्घता । यजमानस्येत्यत्र मयुतआका-रोऽग्रेऽस्ति । अतो ह्रस्वतैव यजयोः स्यस्य च किञ्चिद्दी-र्घता पश्चून्पाहि । अत्र पकारह्निकारयोः किञ्चिद्दी-र्घोच्चारः । द्वितीयाध्याये मित्रावरुणौ त्वोत्तरतइत्यत्र वकाररुकारयोः किञ्चिद्दीर्घता । तकाररेफयोर्हलित्र-

प्रतिज्ञासूत्रे "ईषद्दीर्घता च भवति" । एकमात्राकालापेक्षया किञ्चिदधिककालमुच्चारणीयः सार्द्धैकमात्रिकः कालइत्यर्थः । अतएवार्ष्यां संहितायां दीर्घपाठेऽमुकोऽध्यायइति लिखितमाचार्य्यैः । इत्यादि सर्वं न ज्ञेयम् ॥ सूत्रार्थं कारिकाऽपि । ह्रस्वं दीर्घं भवेत्किञ्चित्संहितायां परो न चेत् ॥ हलसंयुतायुताकारश्चावर्णो हलिवसर्गयुक् ॥ १० ॥ नवानामपि सूत्राणां परिमताः कारिकास्त्विमाः ॥ केशवेन कृतास्ताः स्युर्वेदाध्ययनबोधिकाः ॥ ११ ॥ परिभाषाङ्कसूत्रं च याजुर्वेदं सकारिकम् ॥ दैवज्ञकेशवेनेदं कृतं ह्रस्वस्वरान्वितम् ॥ १२ ॥ ह्रस्वोदात्तादिभिर्भेदैः सह्रस्वस्वरलक्षणम् ॥ शिक्षादिभिः षडङ्गैश्च विज्ञेयं वेदपाठकैः ॥ १३ ॥ इति श्रीदैवज्ञकेशवकृता प्रतिज्ञासूत्रानुसारिणी केशवीशिक्षा समाप्ता ॥

---

# अथ तत्कृता पद्यात्मिका शिक्षा

अनुदात्तादुदात्ताच्चेत्स्वरितोत्तर एव च ॥ हृच्छि
कर्णमूलेषु न्यसेदस्मसंशयम् ॥ १ ॥ अनुदात्तादुद
च्चेदनुदात्तपरस्तथा ॥ अनुदात्तं हृदि न्यस्योदात्तं च
भुवि न्यसेत् ॥ २ ॥ पुनर्हृदि न्यसेन्नीचमिति शास्त्र
व्यवस्थितिः ॥ प्रचितोच्चारणे न्यासो हस्तस्य नासि
प्रतः ॥ ३ ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टो व्य
ञ्जनस्वरः ॥ तैरोविरामः पादवृत्तस्ताथाभाव्यस्त ऋ
ष्टमः ॥ ४ ॥ एतेषां लक्षणान्याहुः कात्यायनमुनी
राः ॥ तत्र जात्यादिसञ्ज्ञानां चतुर्णां दर्शने कर
५ ॥ तिर्यङ्ङ्गमयेद्धीमान्पिपट्टदानवदेव हि ॥ मन
दानमिव चेदुदात्तः प्रत्ययः स्वरः ॥ ६ ॥ आद्यान्त
स्य जोच्चारः पदादौ पठितस्य च ॥ उपसर्गपरो
यस्य छन्दसि नेष्यते ॥ ७ ॥ पदस्याद्यन्तमध्ये स्या
द्वैः सँय्युतस्य च ॥ द्विर्भावे ऽप्येवमेव स्यादिति का
यनश्रुतिः ॥ ८ ॥ अन्तस्थानां द्वितीयस्य सेकारो न
रणं भवेत् ॥ अयुक्तहलिभः शषसैर्ऋकारेण यु
च ॥ ९ ॥ एवमेव तृतीयस्य शषसैः सँय्युतस्य च ॥
कारोच्चारणं कुर्यादिति शास्त्रव्यवस्थितिः ॥ १

ऋटकारस्य च सँय्युक्तासँय्युक्तस्यापि सर्वतः ॥ सैकारो-
च्चारणं कुर्य्याल्लकारस्य तथा भवेत् ॥ ११ ॥ अथ
चान्तस्यान्तस्त्रिविधं गुरुमध्यमलघुत्वयोच्चारः ॥ वा-
क्यस्यादिममध्यान्त्यस्य प्रादिकपरस्य लघ्वेव स्यात् ॥
१२ ॥ वो वां वा वै मन्त्रे लघवो गुरवः पदे च विज्ञे-
याः ॥ देवो वः सविताऽऽदौ त्रय्यमुदाहरणमन्येषा-
म् ॥ १३ ॥ असँय्युक्तस्य मूर्द्धन्योष्मणः खोच्चारणं म-
तम् ॥ दृश्यते सँय्युक्तस्यापि कस्य योगे ष एव हि ॥१४॥
छन्दसीत्येव खोच्चारो लोके प्रकृतिरिष्यते ॥ अनु-
स्वारस्य ठँकार आदेशश्छन्दसि स्मृतः ॥ १५ ॥ ऊ-
ष्मरेफेषु परतस्तस्य त्रैविध्यमुच्यते ॥ ह्रस्वाद्दीर्घाद्दीर्घ-
ह्रस्वो गुरौ च परतो गुरुः ॥ १६ ॥ ऋकारपरऊष्मा-
न्त्ये दीर्घाद्दीर्घोऽपि जायते ॥ परसवर्णो ह्यनुस्वारस्य-
च्चप्रकृतिरुच्यते ॥ १७ ॥ अणुमात्रमनुस्वारो ह्युक्त
मं चाणुमात्रकम् ॥ शषसे च कखपफे विसर्गाः सन्ति
यत्र च ॥ १८ ॥ वाचो विरामः कर्त्तव्यस्तत्रैषश्श्रुतिचो-
दनात् ॥ सँय्युक्तस्य पदाद्यस्य चाकारस्य प्रतीयते ॥
१९ ॥ ईषद्दीर्घतयोच्चारः कात्यायनमुनेर्गिरा ॥ आस्ति-
कस्य मुनेर्वंशे जातो दैवज्ञगोकुलः ॥ २० ॥ तत्सुतेन
केशवेन कृता सम्यक् शुभाशिनाम् ॥ प्रीत्यर्थं सुधियां
कारिकावली निर्म्मला शुभा ॥ २१ ॥ इति श्री आ-

स्तिकमहर्षिवंशोद्भवदैवज्ञगोकुलचन्द्रसुतदैवज्ञकेशव
मकृता कारिकावली सम्पूर्णा ॥

# अथ मल्लशर्म्मकृता शिक्षाऽऽरभ्यते ॥

नत्वा गणपतिं देवं ध्यात्वा श्रीकुलदेवताम् ॥ मल्लशर्म्मा हस्तपूर्वां करोमि स्वरप्रक्रियाम् ॥ १ ॥ नत्वाविघ्नहरं सदा शुभकरं सर्वस्य कामप्रदं स्मृत्वा श्रीगुरुपादुकां सुललितां ध्यात्वा परां देवताम् ॥ वेदे वाजसनेयके त्वधिकृता विप्राश्च ये सत्तमास्तेषामेव कृते कृता न कुधियां हस्तस्वरप्रक्रिया ॥ २ ॥ अथ साधारणानियमः, तथा प्रातिशाख्ये मनुः । ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा ॥ स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥ ३ ॥ तथा उत्तानपाणिं फणवत्कृत्वा सह शलाकया ॥ गुरुं प्रणम्य मनसा ततः स्वाध्यायवान्भवेत् ॥ ४ ॥ अत्र जपादौ हस्तस्वरवर्णहीनस्यानधिकारत्वं रावणेन स्वराङ्कुशे याज्ञवल्क्येन शिक्षायां च बोधितम् । तथा हि हस्तहीनं तु योऽधीते हस्तस्वर (१) विवर्ज्जितम् ॥ ऋग्यजुः सामभिर्दग्धो वियोनिमधिगच्छति ॥ ५ ॥ इति याज्ञवल्क्यशिक्षायां चोक्तम् । जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः ॥ इत्युक्तं प्रातिशाख्ये । मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या-

(१) स्वरवर्ण इति 'ख' पुस्तकपाठः ॥

प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ६ ॥ इत्यपि तत्रैवोक्तम् । एतेन हस्तस्वरवर्णयुक्त एव वेदोऽध्येतव्य इत्यतो हस्त-स्वरप्रक्रियोच्यते । तत्र तावद्धस्तस्वरस्य मूलस्थानं श्लो-केकेन कथ्यते । तथा । आदौ हस्तं न्यसेन्मध्ये स्थिति-रेषा सनातनी । ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ॥ ७ ॥ इति मूलस्थानम् । अधस्तात्प्रव्रजन्पूर्वीमू-र्द्धान्मध्ये च तिष्ठति ॥ मध्यतो दक्षिणं गच्छेद्दक्षिणाद्या-ति चोत्तरे ॥ ८ ॥ दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम् ॥ उत्तराद्यात्यधो हस्तं स्वरं दृष्ट्वा च दक्षि-णे ॥ ६ ॥ अर्द्धन्युब्जे ततः पाणिरधस्ताद्याति दक्षि-णे ॥ सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः ॥ १० ॥ सिंध्वसि प्रतीकं च ह्यवसानं विना करम् ॥ मध्य-तो याति सर्वत्र व्यूर्द्धमेव सुनिश्चितम् ॥ ११ ॥ अनु-दात्तसमूहो यान्वर्णानाश्रित्य तिष्ठति ॥ ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् ॥ १२ ॥ स्वरितेऽप्येव-मेव स्याद्दक्षिणांसे विशेषतः ॥ न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् ॥ १३ ॥ प्रतीकेऽपि विशेषोक्तिर्म-न्यते वाऽनुवर्त्तिनम् ॥ १४ इति सामान्यविधिः ॥ ए-कारेण समा रेखा मूर्द्धि वर्णस्य या स्थिता ॥ वामगा-न्तां विजानीयादूर्ध्वगां व्यूर्द्धसंस्थिताम् ॥ १५ ॥ ति-

थ्यग्रेखा च वर्णस्य पादपार्श्वे स्थिता तथा ॥ ऊर्द्ध्वरेखा-सहायेन तस्यास्तु स्यादधो गतिः ॥ १६ ॥ वामरेखा-सहायेन गतिस्तस्यास्तु दक्षिणे ॥ बिन्दोर्गतिश्च जात्य-स्य मध्ये स्यादिति निश्चितम् ॥ १७ ॥ अर्द्धन्युब्जस्य पूर्णस्य दक्षिणः स्यात्त्वधोगतिः । इति चतुस्स्वरगतिः । पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा सव्यक्रमेण हि । अङ्कैः पङ्क्तिश्चतुर्भिश्च स्वरविज्ञैरुदीरिता ॥ १८ ॥ इति पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा ॥ अथ हस्तस्वरगतिप्रमा-णम् ॥ षडङ्गुलिप्रमाणानि दक्षिणे च तथोत्तरे ॥ ऊर्ध्वे नवाङ्गुलिर्ज्ञेया गतिः पाणेरधस्तथा ॥ १९ ॥ वामे च दक्षिणाद्याति चार्द्धेऽधस्तात्तथैव च ॥ अष्टा-दशाङ्गुलिर्ज्ञेया गतिर्हस्तस्य सुस्थिरा ॥ २० ॥ इति हस्तस्वरगतिप्रमाणम् ॥ अथ विसर्गोच्चारणप्रमाणम् ॥ ह्रस्वाद्दीर्घाच्च परतो विसर्गश्चेत्तदा बुधः ॥ ह्रस्वस्व-रानुकूल्येनोच्चारयेत्तं सदा बुधैः ॥ २१ ॥ इति विस-र्गोच्चारणप्रमाणम् । अथाङ्गुलिनिस्सरणम् ॥ ह्रस्वे स्व-रितसंयुक्ते वर्णे च सविसर्गके । कनिष्ठा तर्ज्जनी चैव निष्काश्या हि स्वयूथतः ॥ २२ ॥ दीर्घे स्वरितसम्प्रा-प्ते ह्येकामेव कनिष्ठिकाम् ॥ जात्ये युग्मं विशेषेण त्य-क्तव्यमिति निश्चितम् ॥ २३ ॥ स्वरितेभ्यः क्रमेणैव दक्षिणोत्तरगामिनी ॥ कनिष्ठा तर्ज्जनी चैव त्याज्या

प्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ६ ॥ इत्यपि तत्रैवोक्तम् । एतेन ह्रस्तस्वरवर्णयुक्त एव वेदोऽध्येतव्य इत्यतो हस्त-स्वरप्रक्रियोच्यते । तत्र तावद्धस्तस्वरस्य मूलस्थानं श्लो-कैकेन कथ्यते । तथा । आदौ हस्तं न्यसेन्मध्ये स्थिति-रेषा सनातनी । ततः स्वरानुकूल्येन गतिस्तस्य न संशयः ॥ ७ ॥ इति मूलस्थानम् । अधस्तात्प्रव्रजन्पूर्वामू-र्द्धान्मध्ये च तिष्ठति ॥ मध्यतो दक्षिणं गच्छेद्दक्षिणाद्या-ति चोत्तरे ॥ ८ ॥ दृष्ट्वा जात्यस्वरं शीघ्रं मध्यतो याति चोत्तरम् ॥ उत्तराद्यात्यधो हस्तं स्वरं दृष्ट्वा च दक्षि-णे ॥ ९ ॥ अर्द्धन्युब्जे ततः पाणिरधस्ताद्याति दक्षि-णे ॥ सम्पूर्णे सत्यधो गच्छेदधस्ताच्च न संशयः ॥ १० ॥ सिं ह्यसि प्रतीकं च ह्यवसानं विना करम् ॥ मध्य-तो याति सर्वत्र व्यूर्द्धमेव सुनिश्चितम् ॥ ११ ॥ अनु-दात्तसमूहो यान्वर्णानाश्रित्य तिष्ठति ॥ ते युक्तास्तं परित्यक्तुमशक्ता निजबन्धुवत् ॥ १२ ॥ स्वरितेऽप्येव-मेव स्याद्दक्षिणांसे विशेषतः ॥ न च पूर्वोक्तनियमो विद्यतेऽत्रेति निश्चितम् ॥ १३ ॥ प्रतीकेऽपि विशेषोक्तिर्मा-न्यते वाऽनुवर्त्तिनम् ॥ १४ इति सामान्यविधिः ॥ ए-कारेणा समा रेखा मूर्द्धि वर्णस्य या स्थिता ॥ वामगा-न्तां विजानीयादूर्ध्वगां व्यूर्द्धसंस्थिताम् ॥ १५ ॥ ति-

र्ध्वरेखा च वर्णस्य पादपार्श्वे स्थिता तु या ॥ ऊर्ध्वरेखा-सहायेन तस्यास्तु स्यादधो गतिः ॥ १६ ॥ वामरेखा-सहायेन गतिस्तस्यास्तु दक्षिणे ॥ बिन्दोर्गतिश्च जात्य-द्वय मध्ये स्यादिति निश्चितम् ॥ १७ ॥ अर्द्धन्युब्जस्य पूर्णस्य दक्षिणः स्यात्त्वधो गतिः । इति चतुस्स्वरगतिः । पूर्णार्द्धन्युब्जजात्यानां सञ्ज्ञा सम्यक्क्रमेण हि । अङ्कैः षड्भिश्चतुर्भिश्च स्वरविद्भिरुदीरिता ॥ १८ ॥ इति पू-र्णार्द्धन्युब्जजात्यानां सञ्ज्ञा ॥ अथ हस्तस्वरगतिप्रमा-णम् ॥ षडङ्गुलिप्रमाणानि दक्षिणे च तथोत्तरे ॥ ऊर्ध्वे नवाङ्गुलिर्ज्ञेया गतिः पाणेरधस्तथा ॥ १९ ॥ वामे च दक्षिणाद्याति चार्द्धेऽधस्तात्तथैव च ॥ अष्टा-दशाङ्गुलिर्ज्ञेया गतिर्हस्तस्य सुस्थिरा ॥ २० ॥ इति हस्तस्वरगतिप्रमाणम् ॥ अथ विसर्गोच्चारणप्रमाणम् ॥ ह्रस्वाद्दीर्घाच्च परतो विसर्गश्चेत्तदा बुधः ॥ ह्रस्वस्व-रानुकूल्येनोच्चारयेत्तं सदा बुधैः ॥ २१ ॥ इति विस-र्गोच्चारणप्रमाणम् । अथाङ्गुलिनिस्सरणम् ॥ ह्रस्वे स्व-रितसंयुक्ते वर्णे च सविसर्गके । कनिष्ठा तर्जनी चैव निष्काश्या हि स्वयूथतः ॥ २२ ॥ दीर्घे स्वरितसम्प्रा-प्ते ह्येकामेव कनिष्ठिकाम् ॥ जात्ये युग्मं विशेषेण त्य-क्तव्यमिति निश्चितम् ॥ २३ ॥ स्वरितेभ्यः क्रमेणैव दक्षिणोत्तरगामिनी ॥ कनिष्ठा तर्जनी चैव त्याज्या

भङ्गं स्याद्यत्र मन्त्रेण वै रङ्गस्तु भवेदिति ॥ ४३ ॥ महाशब्दोऽतिशब्दश्च यद्वर्णात्प्राक् प्रवर्त्तते ॥ महारङ्गोऽतिरङ्गस्य सञ्ज्ञा तस्यैव निश्चिता ॥ ४४ अथ रङ्गादीनामुच्चारणे प्रमाणम्। ह्रस्वात्तु द्विगुणो दीर्घो दीर्घादेकगुणः प्लुतः ॥ प्लुतादेकगुणो रङ्गो रङ्गादेकगुणाधिकः ॥ ४५ ॥ महाशब्देन सँय्युक्तो व्यञ्जनं चार्द्धमात्रिकम् ॥ अतिरङ्गो महारङ्गाद्वृद्धो ह्येकगुणाऽधिकः ॥ ४६ ॥ एतत्तु किल वेदे वै ज्ञेयं पूर्णोऽपि सुस्थिरम् ॥ अथ द्विस्वरक्रमः ॥ द्विस्वरे स्वरहीनस्य गतिस्तूपरि चोत्तरे ॥ जात्ये त्वर्द्धे च सम्पूर्णे न्युब्जे चतुस्स्वरेषु यत् ॥ ॥ ४७ ॥ स एव नियमो ह्येकैर्द्विस्वरेऽपि च दर्शितः ॥ भेदेनैव प्रकारस्तु (१) लिपिमात्रे सुनिश्चितः ॥ ४८ ॥ तिर्य्यग्रेखा द्विके मध्ये मध्ये वा तिर्य्यगूर्ध्वयोः ॥ उत्तरं याति सोर्द्ध्वञ्च विस्वरस्त्वेक्रमेण हि ॥ ४९ ॥ अथौष्ठमकारस्थानानि ॥ स्वन्ते मिभ्रातौ मोधे च मन्नं मध्वं मधौ मिधौ॥ रन्तोह्णं च मन्ने तु बलं त्यक्त्का मलेऽपि च ॥ ५० ॥ सिमन्थे च मिभर्त्तौ च मिमर्यौ ममयेऽपिच ॥ औदुम्बर्यात्मके चैवं मन्त्राणे म्राह्मणे म्हषे ॥ ५१ ॥ माधोस्तु मर्हिषं मध्यां (२)म्हन्ते च मधानके ॥ म्हस्पतौ च

(१) त्रिमात्रे इति 'ख' पुस्तकपाठः ॥

(२) माहव्योर्म्महिषम्मांद्यामिति 'ख' पुस्तकपाठश्च ॥

पिमत्ते स्तते मालबे मभूष्ते ॥ ५२ ॥ मिभ्ााडिति प्रमुघे च सुघे मघौ प्रमाहके ॥ मम्लुशे मदरे स्नघे मपायो स्त्रह्मचर्य्यके ॥ ५३ ॥ मटे सोमे च मोभ-त्से क्षोमे वैय्यम्मकेऽपि च ॥ ग्रमल्ले च मलाकायां स-ञ्ज्ञा सप्तविभक्तिषु ॥५४॥ स्थानेष्वेतेषु शिक्षायां या-ज्ञवल्क्येन भाषिता ॥ ५५ ॥ अथौष्ठमकारोत्पत्तिः ॥ मकारस्त्वौष्ठसञ्ज्ञः स्यान्मकारं बिन्दुगर्भकम् ॥ सर्वा-सामाङ्गुलीनान्निस्सरणं कार्य्यमत्र वै ॥ ५६ ॥ अथ ठकारस्थानानि ॥ पृष्ठे गोष्ठे च शोचिष्ठत्यनुष्ठाने च पिठके ॥ अधिष्ठानेऽनधिष्ठाने स्वादिष्ठे च वसिष्ठ-के ॥ ५७ ॥ निविष्ठोष्ठत्रनिष्ठेषु कनिष्ठायां मदिष्ठके ॥ निष्ठायां चाप्यनिष्ठायां मजाविष्ठां च षष्ठके ॥ ५८ ॥ प्रतिष्ठायां यविष्ठ्यं च वर्षिष्ठे तिष्ठतेऽपि च ॥ आपो ह्यिष्ठे यजिष्ठे च नेदिष्ठस्त्रिष्ठिनेऽपि च ॥ ५९ ॥ नि-ष्ठीवने चाखरेष्ठः पुञ्जिष्ठे गह्वरेष्ठके ॥ ज्येष्ठे श्रेष्ठे कनिष्ठे च भूयिष्ठायान्तु पिष्ठके ॥ ६० ॥ नरिष्ठायां गरिष्ठे च भ्राजिष्टठेऽष्टविभक्तिषु ॥ सप्तस्वेव यथा प्रोक्ताः सूरिभिः शब्ददर्शिभिः ॥ ६१ ॥ इति षठका-रस्थानानि ॥ यस्सुबोधात्पठेन्नित्यमिमां च स्वरप्र-क्रियाम् ॥ हस्तपूर्वां तु तस्यैव सम्यग्वेदे गतिर्भवेत् ॥ ६२ ॥ श्रीमता कान्यकुब्जेन ह्युपमन्युविनिर्मितेना ॥

भङ्गं स्याद्यत्र मन्त्रेण वै रङ्गस्तु भवेदिति ।
महाशब्दोऽतिशब्दस्य यद्वर्णात्प्राक् प्रवर्त्तते
रङ्गोऽतिरङ्गस्य सञ्ज्ञा तस्यैव निश्चिता ॥ ४
ङ्गादीनामुच्चारणे प्रमाणम् । ह्रस्वात्तु द्विगुणो
र्घादेकगुणः प्लुतः ॥ प्लुतादेकगुणो रङ्गो र
णाधिकः ॥ ४५ ॥ महाशब्देन सँयुक्तो व्यञ्ज
मात्रिकम् ॥ अतिरङ्गो महारङ्गाद्द्वौ ह्येक
कः ॥ ४६ ॥ एतत्तु किल वेदे वै ज्ञेयं पू
स्थिरम् ॥ अथ द्विस्वरक्रमः ॥ द्विस्वरे क
गतिस्तूपरि चोत्तरे ॥ जात्ये त्वर्द्धे च सम्पू
चतुस्स्वरेषु यत् ॥ ॥ ४७ ॥ स एव नि
कै द्विस्वरेऽपि च दर्शितः ॥ भेदेनैव प्रका
त्रिमात्रे सुनिश्चितः ॥ ४८ ॥ तिर्य्यग्रेखा
ध्ये मध्ये वा तिर्य्यगूर्ध्वयोः ॥ उत्तरं याति
विस्वरस्येत्क्रमेण हि ॥ ४९ ॥ अथौष्ठमकार स
न्त्रे भिश्चातौ मोधे च मन्नं मधयं मधौ भि
ष्णो च मन्ने तु बलं त्यक्त्वा मलेऽपि च ॥ ५
मन्वे च भिभत्तौ च भिभयौ मभयेऽपिच ॥
य्यौत्मके चैवं मन्त्रणे म्नाह्मणे म्पे ॥ ५१ ॥
मर्हिषं मध्यां (२)म्हन्ने च मधानके ॥ म्ह

(१) त्रिमात्रे इति 'ख' पुस्तकपाठः ॥
(२) ... 'ख' पुस्तकपाठश्च ॥

पिमते स्वृते मालवे मभूम्रते ॥ ५२ ॥ मिम्भाडिति प्रमुधे च सुघ्ने मध्नौ प्रमाह्नके ॥ मम्लुशे मद्रे म्नघ्ने मपायो म्न्ह्नचर्य्यके ॥ ५३ ॥ मटे सोमे च मीभत्से क्षोमे नैय्यम्मकेऽपि च ॥ म्रमल्ले च मल्लाकायां सञ्ज्ञा सप्तविभक्तिषु ॥५४॥ स्थानेष्वेतेषु म्निन्नायां याज्ञवल्क्येन भाषिता ॥ ५५ ॥ अथौष्ठमकारोत्पत्तिः ॥ मकारश्चौष्ठसञ्ज्ञः स्यान्मकारं बिन्दुगर्भकम् ॥ सर्वासामाङ्गुलीनान्निस्सरणं कार्य्यमत्र वै ॥ ५६ ॥ अथ ठकारस्थानानि ॥ पृष्ठे गोष्ठे च शोचिष्ठत्यनुष्ठाने च पिष्ठके ॥ अधिष्ठानेऽनधिष्ठाने स्वादिष्ठे च वसिष्ठके ॥ ५७ ॥ निविष्ठौष्ठनिष्ठेषु कनिष्ठायां मदिष्ठके ॥ निष्ठायां चाप्यनिष्ठायां मजाविष्ठां च षष्ठके ॥ ५८ ॥ प्रतिष्ठायां यविष्ठ्यं च वर्षिष्ठे तिष्ठतेऽपि च ॥ आपो हिष्ठे यजिष्ठे च नेदिष्ठस्त्रिष्ठिनेऽपि च ॥ ५९ ॥ निष्ठीवने चाखरेष्ठः पुञ्जिष्ठे गह्वरेष्ठके ॥ ज्येष्ठे श्रेष्ठे कनिष्ठे च भूयिष्ठायान्तु पिष्ठके ॥ ६० ॥ नरिष्ठायां गरिष्ठे च भ्राजिष्ठेऽष्टविभक्तिषु ॥ सप्तस्वेव यथा प्रोक्ताः सूरिभिः शब्ददर्शिभिः ॥ ६१ ॥ इति ष्ठकारस्थानानि ॥ यस्सुबोधाम्पठेन्नित्यमिमां च स्वरप्रक्रियाम् ॥ हस्तपूर्वां तु तस्यैव सम्यग्वेदे गतिर्भवेत् ॥ ६२ ॥ श्रीमता कान्यकुब्जेन ह्युपमन्युविनिर्मिता ॥

श्रीमद्देवस्वरूपाणां श्रीमद्वाकपतिशर्म्मणाम् ॥ ६३ ॥ सूनुना पितृभक्तेन मल्लविप्रेण धीमता ॥ विक्रमार्कगताब्देषु चन्द्रवस्वगभूमिषु ॥ ६४ ॥ ऊर्ज्जमासे सिते पक्षे ह्येकादश्यां शनेर्द्दिने ॥ कृतेयं बालबोधाय स्वहस्तस्वरप्रक्रिया ॥ ६५ ॥ इति श्रीमत्कान्यकुब्जोयोपमन्युगोत्रीयाग्निहोत्रिखगपतितनूजपितृभक्तघाटमपुरवासिमल्लशर्म्मकृता शिक्षा समाप्ता ॥

---

# अथ स्वराङ्कुशशिक्षाऽऽरभ्यते ॥

---

हेरम्बं चण्डिकां नत्वा शम्भुं सूर्यं हरिं गुरुम् ॥
सरस्वतीं कविवरान्वक्ष्येऽहं स्वरनिर्णयम् ॥ १ ॥ उ-
दात्तान्निहतः स्वारः स्वरितात्प्रचयो भवेत् ॥ उदा-
त्तात्स्वरितात्पूर्वो नान्यमापद्यते स्वरम् ॥ २ ॥ व्यञ्ज-
नैस्तु यवौ यत्र प्रयुज्येते ततः परम् ॥ अपूर्वो नीचपू-
र्वो वा जात्यः स्वारः स उच्यते ॥ ३ ॥ एदोतोकश्चयो-
र्यत्र नीचोऽकारः परो यदि ॥ एकीभावे भवेत्तत्र
स्वरोऽभिनिहितस्तदा ॥ ४ ॥ इ उ वर्णौ यदोदात्तावा
पद्येते यवौ क्वचित् ॥ अनुदात्तस्वरे नित्यं विद्यात्क्षैप्र-
स्य लक्षणम् ॥ ५ ॥ इकार उच्चः पूर्वस्मिन्परस्मिन्नि-
यतः स च ॥ प्रश्लिष्टमाङ्कुराचार्याः स्वरवर्णविदस्तदा ॥
६ ॥ कम्पन्ते ते च चत्वारः स्वरितोच्चोदयाः स्वराः ॥ एत-
त्सम्यक्प्रकारेण ज्ञात्वाऽसौ कम्पविद्भवेत् ॥ ७ ॥ नीचेन
स्वरितः स्वारमेकीभावेऽनुगच्छति ॥ नीचं नीचस्त्रि-
भिश्चोच्च उच्चत्वमभिगच्छति ॥ ८ ॥ उदात्तात्स्वरि-
तादस्य स्वरितोदात्तवच्छ्रुतिः ॥ प्रकृत्या निहितं चा-
ङ्कुराचार्याः स्वरवित्तमाः ॥ ९ ॥ उदात्तपूर्वं यत्किञ्चि-
च्छन्दसि स्वरितं भवेत् ॥ एष सर्वमङ्कुस्वारस्तैरोव्य-

ञ्जन एव च ॥ १० ॥ अवग्रहात्परं यत्र स्वरितस्स्या-
दनन्तरः ॥ तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः ॥
११ ॥ स्वरे चेत्स्वरितं यत्र विवृत्त्या तत्र संयुतम् ॥
एतत्तु पादवृत्तस्य लक्षणं शास्त्रनिश्चितम् ॥ १२ ॥
जात्यस्स्वारः स जात्येन शुष्यग्ने क्षैप्रउच्यते ॥ तेऽव-
र्द्धन्ताऽभिनिहितः प्रश्लिष्टो हीन्द्र गिर्वणः ॥ १३ ॥ तै-
रोविरामो विष्कभिते तैरोव्यञ्जन ऊतये ॥ पाद-
वृत्तस्य विद्यात्तु ताऽअस्येति निदर्शनम् ॥ १४ ॥ जा-
त्योऽभिनिहितः क्षैप्रस्तैरोव्यञ्जन एव च ॥ तिरो-
विरामः प्रश्लिष्टः पादवृत्तस्तु सप्तमः ॥ १५ ॥ यत्रा-
भिनिहितात्पूर्वो ह्युदात्तो दृश्यते यदि ॥ तत्र स्वा-
रं न कुर्वीत स्थानां नेति दर्शनम् ॥ १६ ॥ एका-
क्षरसमावेशे पूर्वयोः स्वरितः स्वरः ॥ तस्योदात्ततरो-
दात्तादर्द्धमात्रार्द्धमेव वा ॥ १७ ॥ स्वरात्परं व्यञ्जनं य-
त्पञ्चमेनान्वितं यदि ॥ पूर्वस्य स्वरतो नादो न पूर्व-
स्वरते स्वरः १८ ॥ यत्र स्वरात्परो नादः पूर्वस्वरि-
तभाक्परः ॥ तत्राक्षेपो न कर्त्तव्यो नादे अक्षघेऽ-
पि तत्परे ॥ १९ ॥ स्वरितस्यानुरूपेण कम्पं कुर्वीत
शास्त्रवित् ॥ ह्रस्वे ह्रस्वं विजानीयाद्दीर्घे दीर्घं तथैव
च ॥ २० ॥ स्वरितान्नियतं गच्छेत्स्वरितो नियत-
श्च नो ॥ द्विमात्रो यत्र दृश्येत ह्रस्वकम्पः स उच्यते ॥

२१ ॥ अनुदात्तं क्रमात्कुर्य्यात्स्वरितं च्यावसम्ब्रयेत् ॥ पुनर्नियतमागच्छेद्दीर्घं कम्पः स उच्यते ॥ २२ ॥ जयन्तस्वामिना प्रोक्ताः श्लोकानामेकविंशतिः ॥ स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये ॥ २३ ॥ एकोदात्तं पदं विद्यादेकस्वारमथापरम् ॥ कानि चोदात्तानि कनिष्ठं निहितं स्मृतम् ॥ २४ ॥ उदात्तान्निहितः स्वार्य्यः स्वारोदात्तौ न चेत्परौ ॥ स्वरितो यस्तथा भूतो ज्ञेयः सप्ताक्षतोऽस्त्विति ॥ इति श्रीजयन्तस्वामिप्रोक्ता स्वराङ्कुशा शिक्षा समाप्ता (१)

(१) केचन रावणकृता स्वराङ्कुशा शिक्षा प्रतिपादयन्ते ॥

# अथ षोडशश्लोकी शिक्षाऽऽ

अथ शिक्षां प्रवक्ष्यामि वाच उच्चारणे वि
संव्यवहारेषु स्वयं प्रोक्ता स्वयम्भुवा ॥ १
ह्रस्वा वर्णाः स्वरा द्वाविंशतिर्यमाः ॥ चत्वा
नुस्वारऽँ ऽँपस्त्रिषष्टिकाः ॥ २ ॥ समास्तेऽ
ऌवादीर्घलृपञ्चमः ॥ एदैरोदौ तु चत्वा
न्यक्षराणि च ॥ ३ ॥ ह्रस्वदीर्घप्लुता भे
ऽनुदात्तकाः ॥ स्वरितश्चापि ते सानु
नासिकाः ॥ ४ ॥ इत्यष्टादशधा भेदा
नः स्वराः ॥ कुचुटुतुपुवर्गास्तदुत्पञ्चवर्णस
इति स्वरभेदाः ॥ कुचन्त्यच्वादिवर्गाणा
ञ्चमादितः ॥ खफाद्याश्छठथा ज्ञे
कृयनाः स्मृताः ॥ ६ ॥ अतश्चैतः स्व
लो ञमो ङमो जबः ॥ खयशपः शस
राश्च तङ्व्यञ्जनाः ॥७॥ कादयो मान्तिकाः
पञ्चमान्तरे ॥ शषसहाः स्युरूष्माणोऽन्त
स्मृताः ॥ ८ ॥ कखतँपफतँपूर्वः क्रमा
जिह्वामूलीयको ज्ञेयउपध्मानीयसञ्ज्ञक
वर्गाँश्च विसर्गानुस्वारव्यङ्गं पराश्रयम् ॥ ए

खौ ग्लौ दीर्घश्च गुरुस्तथा ॥ १० ॥ इति व्यङ्गभेदाः ॥
हकुविसर्ज्जनीयानां स्यात्कण्ठ्यं यिश्चु तालुकम् ॥ ऋटु-
र्षं स्लृतुला दन्त्यम्पूपध्मानीयमोष्ठजम् ॥ ११ ॥ वो दन्तो-
ष्ठं ञमस्यापि नासिकायमयुग्वुरः ॥ ओदौतोरपि क-
ण्ठोष्ठं त्वेदैतोः कण्ठतालुकम् ॥ १२ ॥ जिह्वामूली-
यमानस्य जिह्वामूलं हि चाष्टमम् ॥ सद्यो बोधकरा
शिक्षा मणिभूता प्रकाशिता ॥ १३ करालो न च ल-
म्बोष्ठो नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजिह्वश्च प्र-
योगान्वक्तुमर्हति ॥ १४ ॥ व्याघ्री दद्भिर्हरेत्पुत्रान्भीता
पाताच्च पीडनात् ॥ तद्वत्प्रयोजयेद्वर्णान्स्तेन लोके म-
हीयते ॥ १५ ॥ इति वर्णोच्चारः ॥ शिवास्यान्निसृतां
शिक्षां प्रयतो यः पठेदिह ॥ पुत्रकीर्तिधनायु-
ष्मान्स्वर्गतिसुखमश्नुते ॥ १६ ॥ इति रामकृष्णवि-
रचिता षोडशश्लोकी शिक्षा समाप्ता ॥

---

# अथातोऽवसाननिर्णयं व्याख्यास्यामः ॥

नमस्कृत्य तु तं देवं शङ्करस्य सुतं प्रभुम् ॥ यस्य प्रसादाद्धेतस्य बुद्धिभेदोऽप्यभून्मम ॥ १ ॥ अवसानस्तु वक्ष्यामि यथा वदनुपूर्वशः ॥ २ ॥ इषे त्वा भूताय कुक्कुटोऽसि जनयत्यै त्वा मा भेः पृथिवि देवयजन्यदित्यै व्युन्दगमस्कन्नमद्याग्ने वेरग्नेऽ दब्धायो दिवि विष्णुरग्ने व्रतपतेऽन्वसत्यैष ते रुद्र भागः स्वाहा वृष्णमेष ते गायत्रो वरुणस्योत्तम्भनमग्नेस्तनूः सिंह्यसीऽ ध्रुवोसत्वा सिंह्यसि ध्रुवोऽसि रक्षोहणौ वलगहनं स्वराडसि रक्षोहणो वो मित्रस्य मा देवीरापो व्याचन्ते समुद्रङ्गच्छ मनो मे तर्प्पयत स्वाङ्कृतोऽस्युपयामगृहीतोऽस्याग्रयणः सोमः पवते मित्रावरुणाभ्यान्त्वाऽऽत्मने मे मधवे त्वाऽग्नये त्वा मह्यं यस्तेऽश्वश्वसनिरग्नये त्वा गायत्रच्छन्दसं ओषधीनान्त्वोषधिवल्लान्देवान्दिवमापये स्वाहाऽग्निरेकाक्षरेण मित्रो व्यसवस्त्रयोदशाक्षरेणैष ते ये देवा ऽऽआविर्म्मय्योऽजह्वीमारोहाग्निः पृथुः सवित्रा प्रसविना पृथिव्याः सधस्थाद्वसवस्त्वोभयोरदितिष्ट्वा व्यसवस्त्वाऽऽकूतिमग्निम् ॥ ३ ॥ विष्णोः चक्रमसि च दस्यपाक्त्वाऽयस्पुरः

यस्य सजूर्ऋतुभिरनड्वान्वयोराडायुर्मे पृथिवीच्छ-
न्दोऽग्निर्देवताऽऽशुस्त्रिवृन्नवविंशᳬ शस्यास्तुवताच्छच्छ-
न्दस्तन्तुना रायस्त्रिवृदसि राड्यसि विराडसि सम्रा-
डसि स्वराडस्यधिपतिरसि सहस्रस्य प्रमा सेनाश्च-
ग्रामणे भ्रुवे शम्भवाय पर्यायेमा मे गृणदे वेद्धाजश्च
सप्तविंशᳬ प्रति: समुद्रोऽसि स्वर्ग्यं घर्मस्तेजोऽसि प्र-
थमा द्वितीयैरश्विभ्यां त्वा होता यक्षत्समिधाग्नि-
न्द्वादश्यामश्विनौ सरस्वतीन्द्रन्त्वानोऽग्निᳬ स्विष्टकृत-
न्देवोऽअग्निःस्विष्टकृत्त्वामह्वाग्नये स्वाहा हिङ्का-
राय यते कायाऽऽबह्मन्नध्यायान्तस्ताऽभावश्वस्तू-
परोऽध्याग्रान्त: प्रादन्ददद्भिर्न्नवाग्नेय: कृष्णग्रीवस्त्रिस्रो
बह्मणो नाह्मणᳬ सप्तदश सुमित्त्रिया न: सुमित्त्रिया
न: सुमित्त्रिया न:ऽएधोऽसीति द्वे प्रते चतुस्त्रिंᳬ
शदित्यन्त्यावसानानि ॥ ४ ॥ अथ व्यवसानानि ।
शुम्भाऽइन्द्रोऽग्ने बह्म सँव्वपामि पुरा क्रूरस्य सवि
तुस्त्वा गन्धर्व्वस्त्वोपहूतो द्यौरेषा ते व्वसुभ्यस्त्वा व्वि-
दोऽस्यग्निर्ज्ज्योति: सᳬहिताऽस्युपहूताऽइहैदं हिऽ-
त्याकूत्यै प्रयुजऽऊर्गसि द्वे त्वमग्नेऽभित्यमदित्यास्त्वा
भद्रो मे तपसायनो मे देवस्य त्वोभयोरुद्दिवमन्य-
न्त्याव्रतेनात्तौ मनसाऽइदमापऽऐन्द्र: प्राणो माऽपो-
ऽग्नेर्व्व: सोम राजन्निन्द्रवायूऽइमेऽअयँव्वाँयथा वाङ्क्षा

तमप्रत्नथाऽयँव्वेनो ध्रुवोऽसि कोऽसीन्द्राग्नी ऽआगतं यज्ञ सजोषाऽइन्द्र चतस्रो व्विवस्वन्नादित्य बृहस्पतिसुतश्येजतु दधमाव्यऽआतिष्ठ तिस्रऽउदुत्यँव्वि नऽइन्द्रेति तिस्रऽइह रतिः ॥ ५ ॥ ध्रुवसदन्त्वा ग्रहाऽऊर्ज्जोऽच्छतयऽइन्द्रस्य व्वज्रो यवो यस्तेऽआ मा व्वाजस्याऽस्मै वः चत्वश्योऽत्वं प्रपर्व्वतस्य प्रजापते नाभिभ्यामच्छावस्व कुविदङ्ग पुरीष्योऽसृतठं० सत्यमुखाऽऽक्रणोरुदित्यै रास्नाऽस्मूर्द्धा भवाग्निर्मूर्द्धा मधुश्चेमं मा हे शुक्रश्च व्विश्वकर्म्मोभयोर्न्नभश्च षश्च षोडशी स्तोमोऽग्निठं० होतारमग्ने त्वं तपश्च परमेष्ठी त्वोभयोर्न्नमोऽस्तु तिस्रऽआयुर्व्येत्तेन ऽऋचो नाम ॥ ६ ॥ स्वादुष्टीन्त्वा कुविदङ्ग यदा पिपेषेदठं० हवीरेतो मूत्रं दृष्ट्वा रूपे निषसाद नाभिर्म्मया देवा यद्रापोऽअभिम्वनो च्छागस्य प्रजापतये त्वाऽग्निः पशुः प्राणाय स्वाहेमा नु कन्दऽअग्निश्चाघैतानष्टौ यङ्क्रन्दमोऽआ सुते कुतस्त्वमधि नो दस्रा युवाकवो दैव्यावध्वर्यूऽअस्येदिन्द्रो ब्रह्मणस्पते ऽअपेतः स्योना पृथिवि भूर्भुवोऽहानि शन्ते हठं०ह यमाय त्वाऽनाधृष्टा पुरस्तादिषम्बासां भुवां पते यस्ते स्तनो गायत्रीच्छन्दः समुद्राय त्वाऽभीमं पयसो रेतः स्वाहा प्राणेभ्यो लोमभ्यः स्वाहेति शतमेकचत्वारिंठं०

ष्टदित्येतानि व्यवसानानि ॥ ७ ॥ अथ चतुरवसाना-
नि प्रत्युष्टꣳ० रक्षोऽग्नीषोमयोरुज्जितिꣳ० सजूर्दे-
वेनेभ्यानात्वा त्र्यम्बकँयजामहेऽꣳ०मुरꣳ०मुष्टे या
ते धामान्युश्मसि देवस्य त्वाऽग्नीषोमाभ्यां मरु-
त्वन्तं वृषभं मा छिन्निर्ऋरग्ने पवस्वोत्तिष्ठन्नोजसाऽदृश्रम-
स्य केतवो युनक्तं देवस्याऽहंज्योतिष्मन्तं प्रैतु सुप-
र्णोऽसि विराड्ज्योतिरिमꣳ० साहस्रं तिस्रो व्या-
यो: पून पुनन्तु मा पितरऽएधोऽसि सँव्वत्सरोऽस्य-
ग्निमह्योभयोरिन्द्रस्यौजस्त्यऽस्त्जवे त्वा स्वाहा रुद्र-
द्राय हिरण्मयेन पात्रेणेति द्वानिꣳ०ष्टदित्येतानि व्य-
वसानानि ॥ ८ ॥ कृष्णोऽसि नमो वऽउशिगसि स-
मुद्रोऽसि मधुमतीर्नऽइष: प्राणाय परमेष्ठ्यभि-
धीतऽइन्द्रश्च प्रोह्यमाणः सोमो विश्वे देवा इऽअ-
ग्निरेकाक्षरेण पूषा पञ्चाक्षरेण मित्रो नवाक्षरेण
वृष्णऽऊर्म्मिरस्येतस्या वेष्टा इन्द्रसूका दक्षिणामारो-
ह प्रतीचीमुदीचीमूर्द्ध्वा व्व्यो मा छन्दोऽग्नेर्भा-
गोऽसि व्वसूनाँय्यवानामेकया स्तुवत नवभिर्न्नवदश-
भि: ॥ ९ ॥ एवश्छन्दोऽरश्मिना सत्याय प्रतिपदसि
नमो हिरण्यबाहवे बभ्लुशाय रोहिताय कृत्स्नायत-
योष्णीषिणे व्विसृजद्भ्य: सभाभ्यो गणेभ्यस्तक्षभ्य:
श्वभ्य: कपर्द्दिने ह्रस्वाय ज्येष्ठाय सोभ्याय व्वन्याय

व्विल्मिने स्तुत्याय कूप्याय व्वात्त्याय प्राप्याय सिक-
श्याय ब्रज्याय शुष्क्याय प्रथममग्निमद्य स्तूपस्त्वा-
ऽश्वेति षट्पञ्चाशदित्येतानि निरवसानानि ॥१०॥
अथ मध्यावसानानि ॥ द्वितीयर्ठ० शम्मास्यग्ने व्वाज
जिद्विभूरस्यादद्दे रावाऽसि द्वे मध्यऽइन्द्राय त्वा बृहद्द्व-
ते पञ्चेति मध्यावसानानि ॥ ११ ॥ अथ पञ्चावसा-
नानि ॥ प्रैतु व्वायुरनिलन्द्वे पञ्चावसाने ॥ १२ ॥ अ-
थ षडवसानानि ॥ या तेऽअग्नेऽयःशया या ते घर्मा
द्वे षडवसाने ॥ १३ ॥ अथ नवावसानानि ॥ मखस्य शि-
रोऽस्यग्नय त्वा द्वे नवावसाने ॥ १४ ॥ अथ मर्य्या-
दा ॥ शतानि चतुर्द्दश त्रिनवतिर्य्यवसानानि १४९३
भवन्ति ॥ द्वे शते त्रयस्त्रिर्ठ०शदन्त्यावसानानि २३३
भवन्ति ॥ शतं पञ्चाशत्त्र्यवसानानि १५० भवन्ति ॥
त्रिर्ठ०शच्चतुरवसानानि ३२ भवन्ति ॥ षट्पञ्चाश-
न्निरवसानानि ५६ भवन्ति ॥ पञ्च मध्यावसानानि ५
भवन्ति ॥ द्वे पञ्चावसाने ५ द्वे षडवसाने २ द्वे नवा-
वसाने भवतः ॥ सर्वाण्यवसानान्येकीकृत्यैकानविर्ठ०
शतिः शतानि पञ्चसप्ततिः सङ्ख्या कण्डिकायास्त्वा-
र्रिठ०शदध्याये १९७५ ॥ इत्यनन्तदेवविरचिताऽव-
साननिर्णयशिक्षा समाप्ता ॥ रसवेदाङ्केन्दुमिते १९४६

फाल्गुने शुक्लपक्षके ॥ पूर्णिमायां गुरोर्वारेऽवसा-
नान्यङ्कितानि वै ॥ १ ॥

---

# अथ कात्यायनमहर्षिप्रणीतस्वरभक्ति लक्षणपरिशिष्टशिक्षाऽऽरभ्यते ॥

---

अथातः सम्प्रवक्ष्यामि सर्वलक्षणलक्षिताम् ॥ शिक्षां समासतस्तत्र स्वरास्त्वष्टौ प्रकीर्त्तिताः ॥ १ ॥ तैरो-विरामः क्षैप्रश्च तैरोव्यञ्जनकस्तथा ॥ भाव्योऽभिनि-हितो जात्यः पादवृत्तश्च सप्तमः ॥ २ ॥ प्रश्लिष्टइति विज्ञेयाः प्रोच्यन्ते लक्षणान्यथ ॥ अवग्रहउदात्तश्चेत्स्व-रितः स्यात्ततः परम् ॥ ३ ॥ अवग्रहात्पदं यस्तु तं विद्यात्प्रथमं स्वरम् ॥ लक्ष्यमस्य तु विज्ञेयं गोपताविति गो । पतौ ॥ ४ ॥ इकारोकारयोः स्थाने यवौ स्यातामुदात्तयोः ॥ अनुदात्ते पदे नित्यं स क्षिप्रइति कीर्त्तितः ॥ ५ ॥ त्र्यम्बकं इन्न इत्यादि लक्ष्यं ज्ञेयं विचक्षणैः ॥ स्वरितं छन्दसि पदं यत्किञ्चिदपि दृश्यते ॥ ६ ॥ उदात्तपूर्वं तत्सर्वं तैरोव्यञ्जनउच्यते ॥ इडे रन्ते तथा हव्ये काम्ये इत्यादि दर्शनम् ॥ ७ ॥ अकारएकोदात्तेन रेफेणापहतो भवेत् ॥ तस्याभिनिहितं प्राज्ञः कुक्कुटोऽसि निदर्शनम् ॥ ८ ॥ विवृत्त्या दृश्यते यत्र स्वरं च स्वरिते पदे ॥ सस्वरः पादवृत्तः स्यात्तुच्छ्रऽईधे निदर्शनम् ॥ ९ ॥ यत्रोदात्त इकारो हि

निपातैकारसंयुतः ॥ स प्रश्लिष्ट इति ज्ञेयोऽभीममित्या-
दि दर्शनम् ॥ १० ॥ सादौ पदे परे पूर्वं ककारान्ते
पदे स्थिते ॥ कसवर्णं तु विज्ञेयं भिषक्षीसेन दर्शन-
म् ॥ ११ ॥ चकारान्ते पदे तान्ते पूर्वं च समवस्थिते ॥
प्रत्यारम्भो न तत्र स्याद्यच्चाहमिति दर्शनम् ॥ १२ ॥
सादौ पदे परे पूर्वं ङकारान्ते पदे सति ॥ कसवर्ण-
द्वयं तत्र प्राङ् क्सोमइति दर्शनम् ॥ १३ ॥ सादौ प-
दे परे नान्ते पूर्वे च समवस्थिते ॥ तसवर्णं विजा-
नीयात्त्रीग्त्समुद्द्रान्निदर्शनम् ॥ १४ ॥ मादौ पदे प-
रे मान्ते पूर्वमुच्चारिते सति ॥ मसवर्णन्तु तत्र स्या-
द्दिमम्मइति दर्शनम् ॥ १५ ॥ पदमध्ये पदाद्यन्तेऽक्षरद्व-
रेफैश्च संयुते ॥ यकारे जं विजानीयाद्युञ्जानेत्यादिकं
यथा ॥ १६ ॥ टवर्गमन्तरा षस्य खोच्चारश्छन्दसोरि-
तः ॥ प्रत्युदाहरणं षष्टो द्विवेषि त्वा निदर्शनम् ॥
१७ ॥ ऋष्मोर्ध्वरेफषस्योच्चारः सैकारो ह्ल्युता न चेत् ॥
पितृणामिह पित्रेखामित्यादि च निदर्शनम् ॥ १८ ॥
ꣳकारः स्यादनुस्वारस्थाने शलि च रे परे ॥ ह्रस्वा-
द्दीर्घो भवेद्दीर्घाद्ध्रस्वो गुरुरयो मतः ॥ १९ ॥ संयोगे
परतो हꣳसइत्यादि निदर्शनम् ॥ ता२ सवितुरित्यादि
दꣳष्ट्रेत्यादिकं तथा ॥ २० ॥ ह्रस्वदीर्घगुरूच्चारः कर्त्त-
व्योऽत्र यथा क्रमम् ॥ शल् रेफयोरभावेन सिꣳही

प्रत्युदाहृति: ॥ २१ ॥ यरे: परे यामु दिती द्विर्भवे-
द्रेफभागिनाम् ॥ विसर्गाश्च परे यां ऋकारहीनां नि-
दर्शनम् ॥ २२ ॥ अस्कन्नमद्य कस्माच्चित्कृष्णोऽस्या इ-
ति च क्रमात् ॥ सूर्य्यंस्त्वा यौष्मिता चाथ दधात्व-
स्मानिति क्रमात् ॥ २३ ॥ वृहन्त: प्रस्तरेष्ठेति पु-
न: कक्रत्वे निदर्शनम् ॥ पाणिनीयस्य सूत्राभ्यां द्वित्वं
सर्वत्र कीर्त्तितम् ॥ २४ ॥ यवयो: परयो: सस्य द्वित्वं
न स्यात्तु छन्दसि ॥ व्यसवस्त्वा धूपयन्तु तस्य योनिं
यथायथम् ॥ २५ ॥ प्लुताऋकारस्तु रेकारश्छन्द-
सि स्मृत: ॥ पितृणामिति पित्रेणामित्यादि च निदर्श-
नम् ॥ २६ ॥ ह्रस्वं दीर्घं भवेत्किञ्चित्संहिताविषये
स्मके ॥ हलिविसर्गयुते वर्णे प्लुतायुतके च न ॥
२७ ॥ सपत्नान्यन्त्वमवन्येति किञ्चिद्दीर्घो भवेदिह ॥
भागमप्रजावतीत्यादौ ह्रस्वता न तु दीर्घता ॥ २८ ॥
प्लुताकारसंयोगादिति ज्ञेयं विपश्चितै: ॥ इति का-
त्यायनपरिशिष्टे वर्णोच्चारप्रकार: ॥ सन्धयस्तु चतुर्धा विज्ञे-
या लोपागमविकारत: ॥ २९ ॥ प्रकृत्या च तथा
तत्र प्रथमं हि निदर्शनम् ॥ विकारतो यथा चेदं प्रे-
षितेत्यादिकं भवेत् ॥ ३० ॥ देवो व: सवितेत्यादौ
प्रकृत्यादिप्रदर्शनम् ॥ उभौ स्वरौ तयोरन्त: सन्धिर्यत्र
न दृश्यते ॥ ३१ ॥ सा विवृत्तिर्बुधैर्ज्ञेया स एवेति

च पश्यति ॥ एषा चतुर्द्धा विज्ञेया प्रथमा तु पिपीलि-
का ॥ ३२ ॥ परा पाकवती चैव तथा वत्सानुसारि-
णी । वत्सानुसृप्तजिता चैव चतस्रस्ता विवृत्तयः ॥ ३३॥
पिपीलिकाऽऽद्यन्तदीर्घा नाभ्याऽऽसीन्निदर्शनम् ॥
द्वितीया तूभया ह्रस्वा श्विनऽइन्द्रेति दर्शनम् ॥ ३४ ॥
तृतीया चोदिता दीर्घा ताऽअस्येति निदर्शनम् ॥ अन्ते
चतुर्थी दीर्घा स्यात्तानऽआवोढमश्विना ॥ ३५ ॥
स्वरभक्तिः पञ्चधा स्यात्तत्राद्या करिणी स्मृता ॥ रका-
रेण हकारेण सँय्योगो यत्र दृश्यते ॥ ३६ ॥ करिणी
सा तु विज्ञेया बर्हिरसीति दर्शनम् ॥ लकारेण ह-
कारेण सँय्योगो यत्र दृश्यते ॥ ३७ ॥ कुर्विणी सा
हि विज्ञेया उपवल्हेति पश्यति ॥ रकारस्य शकारेण
सँय्योगो यत्र दृश्यते ॥ ३८ ॥ हरिणी सा तु विज्ञेया-
ऽर्शसऽइत्यादि दर्शनम् ॥ लकारेण शकारेण सँय्योगो
यत्र जायते ॥ ३९ ॥ तां हरिणीं विजानीयाच्छतवल्शे-
ति दर्शनम् ॥ रेफस्याथ षकारेण सँय्योगो यत्र दृश्यते ॥
४० ॥ हंसपादेति विज्ञेया वर्षो वर्षीयसीति च ॥ एत-
ल्लक्षणमाख्यातं स्वरभक्तेर्विचक्षणैः ॥ ४१ ॥ ज्ञात्वैतन्म-
नुजो याति ब्रह्मलोकं सनातनम् ॥ इति कात्याय-
नेनैव परिशिष्टं कृतं मुदा ॥ ४२ ॥ इति कात्यायनो-
क्ता स्वरभक्तिलक्षणपरिशिष्टशिक्षा समाप्ता ॥

# अथ क्रमसन्धानशिक्षाऽऽरभ्यते ॥

---

यथा समाम्नातङ्क्रमावसानर्ठं सङ्क्रमेषु ॥ क्रमशास्त्रानुसारेण सन्धानं प्रोच्यतेऽधुना ॥ १ ॥ विश्वधाः परमेण । १ । ह्वार्षीच्छ्रतधारम् । २ । सहस्रधारन्देवः । ३ । अधुक्षः सा । ४ । विश्वधायाऽइन्द्रस्य । ५ । राध्यतामिदम् । ६ । एमि कः । ७ । तस्मै कर्म्मणे । ८ । व्याम्प्रत्युष्टम् । ९ । अरातयऽउरु । १० । एमि धूः । ११ । धूर्व्वामो देवानाम् । १२ । देवहूतमसहुतम् । १३ । हविर्द्धानँ विष्णुः । १४ । हस्ताभ्यामग्नये । १५ । गृह्णामि भूताय । १६ । रश्मिभिर्द्दैवीः । १७ । देवयुवंय्युष्माः । १८ । स्याग्नये । १९ । अग्नीषोमाभ्यां दैव्याय । २० । व्वेत्वद्भिः । २१ । व्वेत्वग्नेः । २२ । धामीव्वह्हविष्कृत् । २३ । इहि कुक्कुटः । २४ । व्वह ध्रुवम् । २५ । वधायाग्ने । २६ । अन्तरिक्षन्धर्त्तम् । २७ । दिवँव्विश्वाभ्यः । २८ । ऽवेत्तु धान्यम् । २९ । व्यानाय दीर्घाम् । ३० । रसेन रेवतीः । ३१ । पृणच्च्यन्ताञ्जनयत्यै । ३२ । वधः पृथिवि । ३३ मौगप । ३४ । वध्यासमररो । ३५ । स्कन्नगायत्रेण । ३६ । जाग-

तेन सुब्रह्मा । ३७ । माऽस्यैनिमिता । ३८ । माऽर्ध्यं-
दित्यै । ३९ । पश्चादग्न्यग्ने: । ४० । यजुषेयजुषे सवि-
तु: । ४१ । त्वा तेन: । ४२ । इति द्विचत्वारिंशत्प्र-
थमाध्याये ॥ पतये गन्धर्व्व: । १ । ईडितऽइन्द्रस्य।२।
दक्षिणो मित्रावरुणौ । ३ । अभिशस्त्यै सवितु: । ४ ।
ध्रुवा ध्रुवा । ५ । माग्निं नम: । ६ । सचन्तामस्मा-
कम् । ७ । अश्न्नाग्येतम् । ८ । ब्रह्मणे तेन । ९ ।
ऊहाग्यग्नीषोमौ । १० । ऊहामीन्द्राग्न्यो: । ११ ।
इन्द्राग्न्योरिन्द्राग्नी । १२ । इन्द्राग्नी व्वसुभ्य: । १३ ।
अवताँऽव्यन्तु । १४ । मरुद्भिरिन्द्र: । १५ । तस्मै
पोषाय । १६ । व्वर्त्तेग्ने । १७ । ह्विमाऽअचारिष-
म् । १८ । व्वेदिषदो ये । १९ । इत्येकोनविंशति-
र्द्वितीयाध्याये ॥ २ ॥ उषसा सूर्य्य: । १ । गृहप-
ते पुरीष्य: । २ । पतिवेदनमित: । ३ । इति त्री-
णि क्रमासन्धानानि तृतीयाध्याये ॥ ३ ॥ चतुर्थे क्र-
मसन्धानाभाव: ॥ ४ ॥ पुरूरवा मन्थामि । १ । र-
ज:शया हरिशया । २ । देववीतये सिंह्हि । ३ ।
ध्रुवो व्वैष्णवम् । ४ । ध्रुवऽऐन्द्रम् । ५ । हव्यवाहन:
श्वात्त्र: । ६ । अभूद्यथायथम् । ७ । इति सप्त पञ्च-
माध्याये ॥ ५ ॥ षष्ठाध्याये क्रमसन्धानाभाव: ॥ ६ ॥
मादयस्वोदानाय । १ । भून्महेन्द्राय । २ । इति द्वे

क्रमसन्धाने सप्तमाध्याये ॥ ७ ॥ अष्टमाध्याये क्रमसन्धानाभावः ॥ ८ ॥ इन्द्रस्य सत्यप्रसवः । १ । इन्द्रँ त्वा जजितः । २ । इति द्वे क्रमसन्धाने नवमाध्याये ॥ ९ ॥ दशमाध्याये क्रमसन्धानाभावः ॥ १० ॥ जागतेन हस्ते । १ । हिरण्ययीमानुष्टुभेन । २ । इति द्वे क्रमसन्धाने एकादशाध्याये ॥ ११ ॥ परिचिन्नोकाम् । १ । इत्येकं क्रमसन्धानं द्वादशाध्याये ॥ १२ ॥ हिमासि साहस्रम् । १ । गवयमूर्णायुम् । २ । उष्ट्रमजः । ३ । शरभन्त्वम् । ४ । इति चत्वारि क्रमसन्धानानि त्रयोदशाध्याये ॥ १३ ॥ अन्तरिक्षँवायुः । १ । वायूराच्चो । २ । बृहती नभः । ३ । इति त्रीणि क्रमसन्धानानि चतुर्दशाध्याये ॥ १४ ॥ अग्नेर्देवः । १ । रथेचित्रो मेनका । २ । असमरथः प्रम्लोचन्ती । ३ । अरिष्टनेमिर्विश्वाची । ४ । सुषेणाऽउर्वशी । ५ । शैशिरौ परमेष्ठी । ६ । दिवः सूर्य्यः । ७ । दिवं ध्रुवे । ८ । इत्यष्टौ पञ्चदशाध्याये ॥ १५ ॥ षोडशसप्तदशाध्यायौ क्रमसन्धानरहितौ स्तः ॥ १६ ॥ १७ ॥ स्वस्तोमः । १ । रथन्तरँवेट् । २ । इति द्वे क्रमसन्धानेऽष्टादशाध्याये । एकोनविंशतिमाध्याये क्रमसन्धानाभावः ॥ १९ ॥ वायुर्ज्योग्रत् । १ । स्वर्म सूर्य्यः । २ । सूर्द्देऽर्य्यं । ३ । आपोऽयञ्चि । ४ ।

इति चत्वारि क्रमसन्धानानि विंशतितमाध्याये ॥ २० ॥
एकविंशतितमाध्याये क्रमसन्धानाभावः ॥ २१ ॥ स्वा-
हाकृतः स्वगा । १ । प्राणाय युक्ते । २ । इति द्वे
द्वाविंशाध्याये ॥ २२ ॥ चतुष्पदश्चन्द्रमाः । १ । च-
न्द्रमा रात्री । २ । वायुः सूर्यः । इति त्रीणि क्रम-
सन्धानानि त्रयोविंशाध्याये ॥ २३ ॥ चतुर्विंशतिपञ्च-
विंशतिषड्विंशतिसप्तविंशतितमाध्यायेषु क्रमसन्धाना-
भावः ॥ २४ । २५ । २६ । २७ ॥ शुचिस्तु स्वाहा ।
१ । देवौ त्रिष्टुभा । २ । इति द्वे क्रमसन्धानेऽष्टा-
विंशाध्याये ॥ २८ ॥ एकोनत्रिंशत्त्रिंशदेकत्रिंशद्द्वात्रिंश-
त्त्रयस्त्रिंशच्चतुस्त्रिंशत्पञ्चत्रिंशदध्यायेषु क्रमसन्धाना-
भावः ॥ २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ ॥
ऊतिभिः कया । १ । ईत्वाऽईंद्यामहे ॥ २ ॥ इति द्वे क्रम-
सन्धाने षड्त्रिंशदध्याये ॥ ३६ ॥ पाहि मधु । १ ।
स्वाहा रात्रिः । २ । इति द्वे सप्तत्रिंशदध्याये ॥ ३७ ॥
सरस्वत्यसौ । १ । इत्येकमष्टत्रिंशाध्याये ॥ ३८ ॥ ए-
कोनचत्वारिंशाध्याये क्रमसन्धानाभावः ॥ ३९ ॥ अ-
विद्याँविद्धयायाम् । १ । ओं ३ क्रतो । स्मर क्लिबे ।
क्लिबे कृतम् ॥ ४० ॥ इति चत्वारि चत्वारिंशाध्याये ॥ इति
पञ्चदशाधिकैकशतं क्रमसन्धानानि । ११५ । एभ्यो-

ऽन्यत्र संहितानुसारेण निर्णयः ॥ इति क्रमसन्धान-
शिक्षा समाप्ता ॥

---

# अथ गलदृक्शिक्षाऽऽरभ्यते ॥

---

इषे त्वाऽश्वस्तूपरः समिद्धोऽअञ्जन्त्सहस्रशीर्षा पुरुषस्तद्देव स्वाहा प्राणेभ्यस्त्वेत्येतेष्वध्यायेषु न गलिता ऋचः । द्वितीयेऽध्यायेऽग्ने व्रतपतऽइति पश्चात्प्रविष्टाऽतस्त्रयस्त्रिᳬशत् । तृतीयेऽध्यायेऽयमग्निः पुरीष्य इति प्रविष्टाऽतो द्विषष्टिः । पञ्चमेऽध्यायेऽग्ने व्रतपाश्च प्रविष्टोत्र विष्णो गतोऽतएकचत्वारिᳬशत् । षष्ठेऽध्याये प्रथमा ऋग्गलिता, देवीरमद्भमित्यत्र देवस्य त्वा एवं पञ्चत्रिᳬशत् । वाचस्पतय इत्यत्र स्वाङ्कृतोऽसि आत्मने मे सम्पृक्ते । अयन्नोऽग्निनय लुप्त्वाश्चतुश्चत्वारिᳬशत् । आदित्येभ्यस्त्वेत्यत्र कदा चन सँव्वर्चसा युग्देवा गातुविदऽउदुत्यमवभृथनिचुम्पुणोशिक्षौ गलिते सप्त षट्पञ्चाशत् । देव सवितरित्यत्र देवस्याहमेकोनचत्वारिᳬशत् । अपो देवाऽइत्यत्र सोमस्य त्विषिरसि देवा लुप्ता द्वात्रिᳬशत् । युञ्जान इत्यत्र युञ्जते मनो विष्णो देवस्य देव सवितः पृथिव्याः सधस्थाद्दसवस्त्वाच्छृन्दन्तु मिलिताष्टाशीतिः । इमानऽइत्यत्र हᳬसः शुचिषदक्रन्ददग्निर्दृᳮ इमानो रुक्मः समिधाग्निं पुनरूर्ज्जा सह-

रव्यायन्ते भवतन्निति मिलिता अष्टोत्तरशतम् ।
मयि गृह्णाम्यग्निर्मूर्द्धा प्रविष्टाऽअपाम्पृष्ठं मही द्यौर्विं
षणो: कर्म्माणि चिन्द्रेवानां त्रिपञ्चाशत् । ध्रुवक्षिति:
शुक्रस्य विश्वकर्म्मा त्वा हि नमस्तेषय रायसि सि-
लितं सहस्य षड्विंशतिं शत् । अग्ने जातानग्निर्मूर्द्धा
त्वामग्ने पुष्करादधि भुवो यज्ञस्यायमिहाग्ने त्वमय-
न्ते लोकम्पृण ताऽअस्येन्द्रं विश्वा न चैता लुप्यन्ति प-
रमेष्ठी त्वा द्वौ मिलित्वा चतु: पञ्चाशत् । नमोऽस्तु
नीलग्रीवाय नमोऽस्तु रुद्रेभ्यो द्वौ मिलित्वाऽशीति-
षष्टि: । अश्मन्नूर्ज्जं हिमस्य त्वा वाचस्पतिं वि-
श्वकर्मन्हविषोद्दु त्वेंद्रं विश्वा नक्तोषासाऽग्ने तं स-
प्तनवति: । वाजस्य देवस्य त्वा वाजस्य नु यास्ते यावऽ-
उद्बुध्यस्व येन वहसि विनस्त्वँ यविष्ठैकोनसप्तति: ।
स्वादीन्त्वा वायो: पूत: कुविदङ्ग त्रिणवति: । चन्त्रस्य
योनि: समुद्र ते उपयामगृहीतोऽसि पुनर्मिव नि-
षसाद यदि जाग्रद्यदापो यदि दिवा यदेन्द्रस्य युवं
सुराममिति नवति: । इमन्मे तन्त्वा शन्नो वाजेवाजे-
ऽवत होता यक्षदिन्द्रस्यषभस्येति सरस्वतीम्मेषस्येति
प्रविष्टा: सप्तपञ्चाशत् । तेजोऽसि तरसवितुर्विश्वो दे-
वस्य पृथिव्यै स्वाहा मधवे स्वाहा वाजाय स्वाहाऽ-
सवे स्वाहेति प्रविष्टा एकोनविंशं शत: । हिरण्य-

गर्भः कुविदङ्ग कः स्वित्सूर्य्यऽएकाकी का स्विद्द्यौरा-
शसोदुपयामगृहीतोऽसि सप्तपञ्चाशत्। शादन्दद्भि-
र्हिरण्यगर्भो यः प्राणतोऽग्ने त्वञ्चतुश्चत्वारिंशं०
शत्। अग्निस्स्व वैश्वानरो नः पञ्चविंशं० शतिः। स-
मास्त्वोद्दयञ्चतुश्चत्वारिंशं०शत्। होता यक्षद्देवा
दैव्या शुचिमुष्णिहानन्तरं सर्वाऽनः पञ्चविंशं० शत्।
देव सवितस्तत्सवितुर्विंशं० शत्। अश्वा जरासो युद्धा
ह्ययमिह मूर्द्धानन्दिवऽएदुत्यँविश्वेऽअदेन्द्र वायू य-
ज्ञो देवानां गावऽउप दैव्यावद्ध्वर्य्यूऽअद्भिभिः सप्ता-
शीतिः। यज्ञाग्निऽआकृष्णेन सप्तपञ्चाशत्। अपे-
तोऽश्वत्थे वः सुमित्रिया नऽउद्दयमग्नऽआयूंषि
ह्यष्टादश। ऋचँवाचम्भूर्भुवः कया नः कस्त्वा स्योना
पृथिवि आपो हिष्ठेतितिस्रो नमस्ते हरसे सुमित्रिया
नोऽभीषुणो दृते दृंहं० ह त्रयोदश। देवस्य त्वा देवी
द्यावा पृथिवीऽन्द्रस्योजोऽश्वस्य त्वा ऋजवे त्वेयत्य-
ग्रे प्रविष्टास्त्रयो हृदे त्वा युञ्जते मनः प्रैतु मखस्य
शिरस्त्रयोदश। देवस्य त्वा सुमित्रिया नऽउद्दयमे-
धोऽसीडऽएह्यदित्यै रास्नासीन्द्राय त्वा षड्द्वाविंशं०
शत्। ईशा वास्यमन्धन्तमोऽन्यदेव सम्भूतिं च मिलि-
तास्त्रयोऽग्नेनय त्रयोदश। एवं चतुष्षष्टिऋचो विलु-
प्तौ एकादशोत्तरशतानि ऋचोऽधिकाश्च॥ एवं कृते

ष्टतिशतान्यपि सङ्ख्यकाश्च प्रोक्ताः समार्य्यैः खलु क
ण्डिकाश्च ॥ १ ॥ इति लुप्तकर्मसङ्ख्यात्मिका शिक्षा
समाप्ता ॥

---

# अथ मनःस्वारशिक्षाऽऽरभ्यते ॥

मनःस्वारं प्रवक्ष्यामि ब्रह्मणा निर्मितं पुरा ॥ भगवान्याज्ञवल्क्येन भाषितँल्लोकहेतवे ॥ १ ॥ अथ त्रिपदा द्विरवसानमध्येऽनुदात्तानि । अथाधिमध्येऽनुदात्तानि भवन्ति । कस्त्वा राजन्तमध्वराणां स नः पितेव मा नः परि ते प्रागपाक् प्रणो मरुतो यस्य योगे योगे तवस्तरं तस्माऽअरन्द्रन्नः परस्या ऽअधि पुनरूर्ज्जा समितमग्ने यत्ते शुक्रं तुभ्यन्ता मयि गृह्णामि मधु व्वाता मधुमान्नोऽग्ने युक्ष्व त्वँय्यविष्ठाग्ने पावक स नः पावका व्वार्चँह्याय शवसे पवमानः सस्तानऽआबोढं त्रिनभानो धियेषितः । आ नो मित्रावरुणाजीजनो ह्यग्ने पत्नीः स यक्षत्तव व्वायो व्विश्वानि देव हरयो धूमकेतवो व्विश्वेभिः सोम्यँय्येना पावक यद्दद्य कच्च व्वरुणः प्राविता पस्त्यान्मे च्छिद्रमिन्द्रो विश्वस्य शन्नो देवीहंते हठँ०ह मा स्वाहा मरुद्भिः पञ्चचत्वारिँठँ० शत् ॥ १ ॥ अथ त्रिपदा द्विरनुदात्ता । प्रघासिनो हवामहे व्वयठँ० सोमान्तय्यँच्छ मही द्यौः सह रय्याऽग्निः प्रियेषु समुद्रस्य त्वा इयं शुक्रज्ज्योतिस्श्चेडच व्वैश्वानरो नः पावका नः सुनावमारुहेयन्दे-

वस्य चेततो रातिꣳ सत्पतिं देवस्य सवितुरुपह्वये गिरीणामुच्चा ते द्रविणो दाः पिपीषति विभक्तारꣳ हवामहऽउभा पिबतꣳ हृदे त्वा द्वाविꣳशतिः । २ । अथ त्रिपदाद्यन्ता मध्येऽनुदात्तानि । अग्ने व्रतपते सुसमिद्धाय वयं सनो नु पुनर्न्नऽउद्गुत्यं तमुत्वा पाथ्यो दृषाऽऽपो हि ष्ठाऽयमग्नेऽभ्यावर्त्तिन्नग्ने वाजस्य येनासमत्स्वग्ने तमद्य नमस्ते रुद्र सखा सुजास्यश्नऽआयूꣳष्यव्यथोऽअद्द्रिभिर्गोभिमद्रूपुणा सख्या तूतुजानः स हव्यवाट् स नऽइन्द्राय सखा यज्ञमच्छाय तेऽअस्य वायो ये ते वनस्पतेऽव कस्त्वा सत्यस्सदसस्पतिं गावऽउपेन्द्रस्यपास्माऽइन्द्राण्याऽउष्णीषोऽश्विना घर्म्ममपातामश्विनैकोनचत्वारिꣳशत् । ३ । अथ त्रिपदाऽऽद्यानुदात्तानि । स्वयम्भूरस्यग्नये कव्यवाहनाय समिधाग्निं त्रिꣳशद्धामास्य प्रत्नान्न हि तेषाँय्युद्वा हि देव सपो राजन्भद्राऽउतैर्भिन्नीं श्रीतꣳ हविरसभाष्यां देवापां फेनेन स्नमस्य योनिर्दीनावन्तं करम्भिणमश्विनक्तस्य ते महोऽअर्णांऽइमसभे सुष्टुतिꣳ सुमतीदृधो युञ्जन्त्यस्यैना विश्वान्यभि यज्ञं केतुङ्कृण्वन्नग्निर्वृत्राणि वृहन्निदिध्मो मित्रꣳ ऊर्ज्जऽउग्रा विघनिना सविता ते शरीरे द्वे व्यायुः पुना तु स्योना पृथिव्येकत्रिꣳशत् । ४ । अथ त्रि-

पदा मध्योदात्तान्यन्नस्य रथ्यग्निर्मूर्द्धा महि त्रीणा-
मिदं विष्णुर्विष्णोः कर्माणि मित्रस्य चर्षणीधृतो वि
मुच्यध्वमषाढाऽसि सऽइधानो भद्रो नऽइष्टो ऽग्र-
ग्निः पुनाति ते यत्ते पवित्रं चोदयित्री सूनृतानां
तनूनपादसुरो द्वारो देवीरग्ने स्वाहा वायुरग्रे-
गाऽअभीषुणो यद्द्य सूरऽउदिते विश्वेभिरुप नः पूष-
न्तव धर्त्तौ दिवश्चतुर्विंशतिः । ५ । अथ त्रिपदा
अन्त्योदात्तानि वीतिहोत्रन्त्वोपप्रयन्तोऽअध्वरं सो-
मानं स्वरणं यो देवाना नऽएतु युञ्जाथां रासभ-
न्त्वसुरवा सोरायुञ्जन्त्याप्यायस्व समेतु ते मदिन्त-
मं मधुनक्तमयमग्निः सहस्रियाऽऋतजिश्चऽऋतस्य स-
तवाँश्च दिवो मूर्द्धा हिरण्यपाणिमूतयेऽग्निन्दूतं यु-
ञ्जन्ति ब्रध्नं कस्त्वाऽऽच्छ्यति स्वादिष्ठया तिस्रो
देवीर्बर्हिरिदं नियुत्वान्वा कया नश्चित्र सरणिर्विश्वद-
र्शतऽइन्द्रवायू बृहस्पतिमिमे सुतास्ताद्विप्रासः प्रजा-
पतौ त्वऽऋतँवाचमेकत्रिंशत् । ६ । अथ त्रिपदा मध्ये
अन्तोदात्तानि भेषजमस्यूर्द्धाऽअस्य काव्ययो राजानेषु
देवी द्यावापृथिवी देव्यो वम्र्यऽइयत्यग्रे षट् । ७ ।
अथ त्रिपदा काम्यः । प्रत्युष्टं रक्षो द्विकं रेवतीर-
मध्वं निषसादाग्निस्तिग्मेन पयः पृथिव्यां नारिरस्याद-
देऽदित्यै रास्नासि । ८ । अथ त्रिपदा जात्यः । क-

स्त्वा विमुञ्चति तद्विष्णोर्य्युक्तेन मनसेन्द्रस्य स्यूरस्व-
ग्नेऽथाह्यग्ने प्रेद्धोऽग्ने कोऽसि बाहू मे स्वयँव्वाजि-
न्द्वैऽग्या होताराऽऊर्द्ध्वमध्वरमस्माच्चमेकादश।९। अ-
थ त्रिपदामध्ये तकारान्ता आपवस्व परिवाजपतिराते
वत्सो मनो देवह्र्य्यन्तो मध्यान्ते पवित्रेण पुनीहि य-
ज्ञा नः षट्।१०। अथ त्रिपदान्ते तकारान्ताः।
आधत्तेडऽएहि तत्सवितुरभ्यावर्त्तस्वाग्निं स्तोमेन र-
क्षोहा व्विश्वचर्षणिः सप्त।११। अथ त्रिपदाम-
ध्ये नकारान्ताः। अग्निर्ज्ज्योतिषोरसकथ्याऽअव का-
या त्वं त्रीणि।१२। अथ त्रिपदान्ते नकारान्ताः।
ऊर्ज्जं व्वहन्ति त्रीणि पदा वयम्।१३। अथत्रिपदा-
न्तरा आद्युदात्ता। आऽय,न्ते हि,मा सु, न यदाऽऽहा-
नि पञ्च।१४। अथ चतुष्पदा द्विरवसाना मध्येऽनुदा-
त्ताऽन्यथादिमध्योदात्तानि भवन्ति। सा व्विश्वायुः अ-
श्मासि मनो जूतिर्य्यम्परिधिं सम्बर्हिरत पितरऽआऽग-
न्त गृहा माऽग्ने त्वठं॰ सु, अनु त्वा माता व्वस्व्यसि
समख्ये परि मा प्रति पन्थां सूर्य्यस्य चक्षुर्भवतन्नऽआप-
तये त्वा सन्ते कार्षिरसि यत्ते सोम त्वमङ्गऽऽवायो
मनो न देवा गातुविदो देवी रापऽएष वो गर्भा, यस्यै-
ते व्वातो वा बृहस्पते व्वाजँव्वाजस्य न्वग्नेऽअच्छ सू-
र्य्यत्वचसस्थऽइन्द्रस्य व्वज्रऽइयदस्यन्वग्निस्त्वमग्ने

द्द्युभिः सन्ते व्वायुर्य्यदग्ग्ने यदत्ति ये जनेषु योऽअस्मा-
व्व्यमन्नपतेऽन्नस्य व्विश्वा रूपाण्यग्ग्नेऽअङ्गिरऽउदुत्त
मँय्यत्तेऽअद्य त्वामग्ग्ने यजमानाऽउद्धुत्त्वा गर्ब्भोऽअ-
सि पुनरासद्य सँम्माँव्यस्यास्ते कामङ्कामदुघे यत्तौष-
धीरुच्छुष्मा यस्यौषधीर्व्याः फलिनीरोषधयः सन्वाङ्ग-
न्थर्व्वा मा मेषमूर्ज्जन्नमोऽस्तु सर्प्पेब्भ्यो याऽइषवो ये
वा यत्ते यावस्तोन्त्समुद्द्रानग्नस्थमिन्द्रुर्व्योऽअग्निन्नर-
ग्ग्नेस्त्वामग्ग्ने अऽङ्गिरसः सखायः सठं० सोऽअग्निर्व्य
नऽऋषयो नमोऽस्तु नीलग्ग्रीवाय या ते हेति स्मीन-
स्तोकेऽसङ्ख्याता सहस्राणि नीलग्रीवाः शितिकण्ठा
दिवँव्ये वृक्षेषु ये भूतानाँव्ये पथाँव्ये तीर्त्थान्व्यस्मन्नू-
र्ज्जँयऽइमा ऽअवसृष्टापरोद्धर्षय यत्र बाणा व्वाजी नक्ष-
यठं० कनन्तत्त्वा याव्येतावद्रूपव्यजुर्भिराप्यन्ते ये
समाना हृ हतोऽउदीरतामङ्गिरसो नो ये नः पूर्व्वे
त्वठं० सोमाच्च्या जानु सरस्वती मनसाऽङ्गान्याकृत्त-
ञ्छिरो मे नराशठं० सः प्राति आनऽइन्द्रो हरिभि-
रिन्द्रः सुत्रामा स्ववाँल्लक्ष्य व्वयमामन्द्रैर्गोभिर्न्न यऽइन्द्रे
ता नासत्या त्वष्टा तुरीपो व्वनस्पतिमभि यः प्राण
तो द्विपदा या दैव्याऽअध्वर्व्यव: किंस्विद्वयत्सूत्र-
र्य्यसमँय्यन्निर्णिजोपप्रागात्सुमद्यदश्वस्य यत्ते गात्रा-
द्धर्य व्याजिनं चतुस्त्रिठं० मह्याजिनो यहाहिरष्टव्वा-

यो शुक्रस्तनूनपात्सूतिभिर्ब्बर्हिषीन्द्रमिन्द्रꣳ स्वाहा
प्रचेतसा देवानाꣳ स्वाहाकृतिरग्निन्त्वष्टा व्वीरमसि
यमः समिद्धोऽअद्य तनूनपात्पथो धन्व्वना गाऽआज-
ह्वन्नीन्द्रस्य व्वज्रो मरुता मनीकामाक्रन्द्य तस्मा-
द्यज्ञात्तस्मादश्वा यो देवेभ्यस्तदेव स नो बन्धु-
र्य्यास्मेधाम्हे विरूपेऽअग्ने शर्द्ध प्रवो महे स्वायन्तऽइव
सूर्य्यं ये त्वा जनिष्ठाऽउग्रोऽनुतेऽदब्धेभिः प्रवीरया
ब्रह्माणि मेऽनुत्तमा तऽऋधगित्था येन कर्म्माणि नयं
त्वमग्ने प्रथमऽइडायास्त्वा हिरण्यपाणिः सविता ये
ते भगप्रणेतरा ना सख्या युदा बध्नन्नुत्तिष्ठापाघठं०
शन्नो व्वातो द्यौः शान्तिरर्थतो यतो, गर्भो देवानाꣳ
समग्निरग्निनाऽह्वः केतुनेडऽएहि स्वाहा पूष्णो चतुः
स्वतिन्नोभिस्तपसे स्वाहा शतमेकाशीत्येकन्यूनम् ।
१५ । अथ चतुष्पदा ह्यनुदात्तानि गायत्रेण त्वा स-
मिदस्युभावामूर्णा दर्व्वि देहि मे मह्णीनामयः शुक्र-
न्त्वाऽग्नेर्ज्जनितस्तुत विष्णो द्वयठं० हविष्मतीरिमा
ह्हदे त्वा व्वाचस्पतये सुवीरो व्वीरास्तुप्रजाः प्र-
जा ब्राह्मणमद्य व्वाममद्यापाꣳरसमेषा वऽउत
स्रेमन्देवाः स्योनाऽसि युवठं० सुरामभागस्य व्वाजी
प्रसह्य भस्मना सजूरब्दः साकँय्यक्ष्म द्रप्सस्वस्वान्ह
कृणुष्व पाजऽइषे राये ज्ञाणाभ्योऽएना वऽउभे सुसन्द्वा-

यो ह्विष्ठाऽवतत्य धनुर्न्नतवस्त्योऽपामिदं गोत्रभिदं
गोविदमस्माकमिन्द्रोऽमीषां चित्तᳬ सप्त ते समुद्र-
द्रा दूर्म्मिरेताऽअर्षन्ति सम्यक्स्रवन्ति सह दानुमपुरु-
हूत ऋगो न पृष्ठो दिव्यᳫश्याम तं देवा यज्ञन्दीचाये
रूपमातिरथ्यरूपं प्रैषेभिः प्रैषानर्द्धऽऋचैरुक्थानाम-
ग्निश्रियां प्रातः सवनं पुनन्तु सोमस्त्वा हुत्वा परि-
स्रुतः पृष्ठीर्म्मे द्रुपदादिव मुमुचानोऽᳬ शुना ते
प्राणाय मे तिस्रस्त्रेधाऽऋतुयेन्द्रो महीमृषु सुबर्हिर-
ग्निकृषे यज्ञो तिस्रऽइडा शमिता नो देवीऽऊर्ज्जा-
ऊती देवा देवानां देवम्बर्हिर्व्वारितीनाᳫवायुद्वा
कुविदङ्गऽऋतवस्थऽऋतुथाऽहीमासाः पङ्क्तिर्षि पृच्छा-
मि त्वा परमियᳫवेदिर्द्दैवानाम्भद्राः स्वस्ति नः प्रात-
र्नि देय स्वागऽऋतवस्ते यज्ञमिहैवाग्ने देवा दैव्यो-
षासा नक्ताद्दुति चतस्रऽएता उव ऽद्रूम्मीन्तासो वह्नीनां
पिता तीव्रान्घोषान्दिवः पृथिव्याः परीत्य भूतानि से-
धाम्नऽआतिष्ठन्नमृ परी मा ऽ उ त्वाऽयᳬ सहस्रमु-
त्तानायामव प्रातरग्निमुतेदानीमायासाय स्वाहा श-
तमेकाधिकम् । १६ । अथ चतुष्पदाद्युदात्तमध्येऽनु-
दात्तानि भवन्ति । भूरसि धृष्टिरसि मयीदमग्ने गृह-
पतेऽक्रन्कर्म्माऽदित्यास्त्वा नमो मित्रस्याग्ने व्रतपाः
परि त्वा गिर्व्वणो गिरो रेवतीरमद्धस्माऽह्निर्भूम्ना

ऽग्ना ३ इ पत्नीवन्याँ २ ॥ ऽआवह यज्ञयज्ञं देव स-
वितर्वीतरठँ० हा मब ग्नाजे वाजेऽवत सोमठँ० त्वा
भानदग्ने सहस्व सोमस्य त्वाऽऽद्वा जिघर्म्मि परि त्वा
ऽग्ने सीद होतः सुजातो विप्राजसाऽहरहरप्रयावँ
विश्वस्य केतुरस्त्वाव्यिन्द्रँविश्वाऽसुन्वन्तमय जा-
मानमोषधीरितीष्कृतिर्नामाग्ने तव श्रवो वयो भुवो
यज्ञस्य विश्ववस्मै प्राणाय काण्डात्काण्डात्परोहन्त्य-
दित्या स्त्वाऽवोध्यग्निर्ज्जनस्य गोपास्त्वाङ्गिरस्त्वस्त्वमा-
ऽऽवाचऽवहन्तुङ्क्षा नमस्तऽआयुधाय मीढुष्टम शिवत-
म नमसो हरसे यो देवानां चक्षुषः पिता बृहस्पते प-
रीन्द्रऽआसामग्रेत सम्मीणि तऽवदेवं दैव्याय धर्त्री
क्रमद्वमग्निना नाजाय स्वाहा विश्वस्वस्य मूर्द्धन्न त्को
पत्न्यां व्याग्घ्रं सोमस्य रूपं यमश्विना यदन त्वया
हि नोऽग्निष्वात्ताः पितरऽआसीनासोऽरुणीनां वे-
देन रूपे सरस्वती योन्यां तेजः पशूनाँ लोमानि प्रा-
यतिहैँव्याभिमाना वरुणः पत्न्यस्मिन्नश्वासः स-
मिद्धोऽग्निरद्दुरो देवीर्यह वासो यद्धरिणी द्य-
न्नाय्यं स्ते केष्वन्तः कच्स्यानो भद्रा यदूवध्यम् मा त्वा-
ऽग्निरध्यै दश्श्वाय यत्ते सादे तँवस्त्वायमेकया च न
त्वावान्समिधेन्द्रमिडाभिरिन्द्रन्देव्या होतारा त्वष्टा
रमिन्द्रं समिधानमहत्तनूपातमुद्भिदमीडेऽन्यमीडि त्वं

भिरग्नो नियुद्भिर्हव्येऽइन्द्रस्य होता यक्षत्तिस्रो देवीर्धि-
यो जोष्टारं स्तीर्णम्बर्हिरन्तरा मित्रावरुणा नीरिय-
तेऽत्रा ते व्वनस्पती व्वेदृष्ठे तिष्ठन्नुजीते पर्य्यपो द्
देवोऽस्याजरासऽइमान्ते व्विश्वे देवाः प्रवायुँ व्यास्था-
न्नोऽषाढँ युत्स्वपृत्स्वतीमश्विना प्रातर्ज्जितम्भगमप्स्ना-
वतीर्गोमतीरिमन्नोवेभ्यो व्वह्व्वपाँ व्विप्रस्थाऽआभा
यावती द्यावापृथिव्यभिमर्ठ० हृदयेन यरिस्मन्नस-
व्वीणि सम्भूतिञ्च व्विद्याञ्च शतमेकञ्चन्त्वाविंशत् ।
१९ । अथ चतुष्पदाऽग्न्योदात्तानि । अयन्नो देवप्रयु-
तो देवेष्वच्छिन्नस्य ते सप्रथमस्ते नोऽअर्व्वन्तोऽग्नये गृ-
हपतये यस्य प्रयाणं द्यौस्ते पृष्ठन्नि होता सर्ठ० सीद-
स्त्वापो देवीर्न्नीभा पृथिव्याऽउद्देपान्नाहू दिवस्परि
श्रोणासुदारऽइडामग्ने ताऽअस्य निवेशनः सङ्गमनः
सोमराज्ञीर्व्वन्हीर्म्मा वो रिषत्पावकवर्च्चाः शुक्रवर्णाऽउद-
तावानस्मद्दिषँ यच्छतेन सम्पत्ववदस्वर्णग्ने जातान्त-
त्पत्नीभिः समप्रच्च्यवन्नुप परि ते धन्व्वनो व्विकिर-
द्रुद्र विलोहित यो नः पिता सूर्य्यरश्मिर्हरिकेशो
विमानऽएषः पृथिव्याऽअहं सदर्यन्नस्तात् सवितुश्चि-
त्तिञ्जुहोमि घृतं मिमिक्षे व्विश्वेऽअद्योमौ ते यदाकू-
ताद्धामच्छऽङ्गिरासन्दो रूपमाश्रवायेडाभिर्वस्नावसु-
रावन्तम्बर्हिषदँ यस्ते रसस्त्वर्ठ० सोम पितृभिर्य्यो-

षत्रादद्दष्टआ सविता प्रथमे तद्देजत्यैकोनचत्त्वारिंशत् । २१ । अथ चतुष्पदा प्रथमे को जात्यः पविन्नेस्त्थो धान्यमस्यदित्यै राऽस्नासि भूर्भुवः स्वरयमग्निः पुरीष्योऽस्थावो देवासस्तस्यास्ते सत्यसवसो व्विष्णोर्नु कं प्रतद्विष्णूरक्षसां भागोऽसि देवीरापोऽपान्नपात्सावित्रोऽसि देवकृतस्यैनसऽइममग्नो देव पुरीष्यासोऽअग्ने त्वं पुरीष्यो मातेव पुत्रँय्यन्त्री राट्सुपर्णोऽस्यध्वर्तेमग्नो देव पुरीष्यासोऽअग्ने त्वन्नऽआभ्मिनन्तोजोऽग्नात्परिस्तुतोऽविन्नं भेऽएवेद्विभूमीना यक्तोऽसकौ यद्वविष्यत्तव शरीरँव्वनस्पते व्वीडुङ्गो येन द्यौरिन्द्राग्नीमित्रावरुणा प्रैतु ब्रह्मणस्पतिं सुखारथिरश्वानिव प्रवो महे मह्युत नऽउग्रस्ते शा व्वास्य शतं न्निंशदुत्तरम् । २२ । अथ चतुष्पदा मध्ये जात्योऽग्ने त्वँव्विष्णोरराटमिन्द्रस्य स्यूः परि वीरस्यग्नेरनीकमभिभूरसि युजे वां सुजातो ज्योतिषा मूर्द्धाऽसि राडयस्युरो हरिकेशः पञ्चाजुह्वाना सरस्वत्यश्विना तेजसा सत्वग्नो यद्वातो देवीऽउषासा नक्तेन्द्रस्य रूपं परिद्यावापृथिवी विदद्वदी त्वन्नोऽअग्ने पयस्पयः परिपातमिमा गिरः प्रनूनङ्क्षनस्य त्वा सप्तविंशतिः । २३ । अथ चतुष्पदा मध्येऽन्यो जात्यो घृताच्यसि घृताचीस्त्योऽयमिहाद्यन्नमीमदन्त सुस-

न्द्रमन्त्वा देव सवितरेष ते कदा चन प्रयुच्छसि प्रजा-
पतेः प्रजाऽअभूम हिरण्यरूपाऽउषसः अन्ये च पर-
मस्याः परावतो याः सेनाऽअपो देवीर्व्वीधा मे पुनस्त्वा
युक्ते दिवि व्वर्त्तीं युनक्त सीरा लाङ्गलमपवीरवत् [illegible] धयः
प्रति विष्ठिताः पृथिवीँय्याश्च अस्मा जन्मानं तव भ्रमा-
सः प्रजापतिस्त्वाऽवोचाम कवये व्विश्वस्य दूतँय्येन
व्वहस्यद्यवोचन्मा नो महान्तँय्या ते धामानि परमाणि
व्विश्वकर्म्मा त्युद्ग्राभञ्चाग्ने प्रेहि प्रस्तरेण परिधि-
ना पशुभिः पशूनायन्तु नः पितरो येऽअग्निष्वात्ता-
स्तमिन्द्रं देवं बर्हिः सरस्वती त्रिः, सर्ठ० मितो रश्मि-
ना भद्रं कर्म्मभिर्म्मो नो मित्रो युन्नीत्वयं वनेषा-
ग्नेऽति निहः स्वासस्थमिन्द्रेणानु त्वा रथो जीमूत-
स्येव भवति त्रिपादूर्द्ध्वस्तस्मादृयज्ञाद्यत्पुरुषेण नीषि
शताऽऽयदिषऽइन्द्रो वृत्रँव्वट्सूर्य्यस्य देवेभ्यो हि दे-
वेन नऽएष वस्तोमो नमस्तेऽअस्तु प्रजापतिः सम्भिय-
माणः कुर्व्वन्नेव स परि चतुष्षष्टिः । २४ । अथ चतु-
ष्पदा कम्पो जात्यः । रूपेण वऽउपाग्भो व्वीर्य्येण स-
धमादो द्युम्निन्नीरादद्दे गायत्रेण प्रतूर्व्वन्नेहि मुञ्चन्तु
माऽसम्भिन्नमहत्यग्निर्म्मनो भैषज्ज्येन सुभूः स्वयम्भूर्य्यद्वा-
जिनो दश । २५ । अथ चतुष्पदा कम्पमानेऽन्तकः ।
द्वितीयंव्वसोः पवित्रमस्यग्नये जुष्टं गृह्णाम्यादेदेऽद्वरस्-

तं सँ॰ग्र्वंसा ध्रुवासि हृध्रुवोऽयमग्ने नयान्दस्ते समु-
द्रे तेऽन्तः सरस्वत्यै व्याचोऽपो देवाऽआ विश्वतः
सँ॰ सृष्टाँ॰ग्वसुभिः सँ॰ श्रितस्ते समुद्रे त्वा स बो-
ध्यति विश्वास्त्वमुत्तमाऽग्ने तव श्रवऽउदग्ने तिष्ठ
स्वेहं वैष्यो ते कद्रु शिवा तनूरघोरासौ योऽवसर्पति
सऽइषुहस्तैरभि गोत्रायमि प्रवन्त धामन्देऽग्निजँस्तुन-
त्रिञ्म परीतोषिञ्चत बर्हिषदः पितरः पयसा शुक्र-
मिन्द्रः सुत्रामोद्दयन्तनूपा भिषजेन्द्रन्दुरः कवष्यो
नाश्विना गोभिः शैशिरेण तेजोऽसि व्यसवस्त्वाञ्जन्तु
गायत्री त्रिष्टुप्द्यौस्ते भर्ते परेभ्यो मा त्वा तपस्पा-
हि नऽओजो न सुवर्हिषमापश्चिदातत्तऽआनो यज्ञं
चन्द्र नाऽआसु पञ्च नद्यस्त्वमिसा सह सोमाऽस्तुत्यी
नाम हिरण्मयेन पात्रेण पञ्च पञ्चाशत् । २६ । अथ
चतुष्पदा द्विकम्पः । अपारत्वद्यौरिव भूम्ना व्वनेषु वि
द्वितीयस्समुद्रे ते चत्वारि । २७ । अथ चतुष्पदा
द्विजात्यः । प्रथमँ॰वसोः पवित्रं तनूपाऽअग्ने सन्नः
सिन्धुः पवित्रे स्थः स्थिरो भवापित वीत स दुरूनत्वा-
न्याऽरु व वहतुमायव्यैर्व्वीयव्यामि वैश्वदेवी पुनत्युप-
हूताः पितरोऽहावस्यग्ने त्रिञ्जीश्यो होताऽह्नुर्युवञी-
व्वाणोऽस्य सोमो धेनुं त्रिरायुषय्यवर्च्चस्यं षोडश । २८ ।
अथ चतुष्पदामध्ये तकारान्ताः । अमृतमसि दिवो

वा ज्योतिरसि यस्ते द्रप्सस्कन्दति कोऽदात्सोम-
स्य त्विषिरस्यग्ने बृहन्हर्ठ० सः सुविषरसञ्ज्ञानमसि
हिरण्यगर्भः सँव्वरुणीन्त्वष्टुः प्रोष्ठदष्म्वः किर्ठ० स्वि-
दासीद्विष्वतश्चक्षुरुत व्वाजस्य मा सोममद्व्यः स्वा-
हा यज्ञँ व्वरुणो यद्दस्या देवव्वर्हिरिन्द्रन्देवऽइन्द्र तस्तो
देवव्वर्हिर्व्वयोधसं देवो नराशर्ठ०सस्त्रिभिरादित्यै-
र्नो भारती यदक्रन्दो यमेन दत्तं हिरण्यशृङ्गो य-
ऽउपष्म्वासय सहस्रशीर्षा वेदाहमेतमद्या देवास्ति-
रश्चीनो व्विततोऽपाधमत्समन्महे शवसा परं ज्योती-
स्तच्चुरनेजदेकमन्यदेव नोऽरयधिकचत्वारिंशत्।
२८। अथ चतुष्पदा अन्त्ये नकारान्ताः। ये रूपाणि
तन्वा शोचिष्ठाव यद्दं स प्रथमऽइदेवन्ते युञ्जानः
प्रथमं हस्तऽआधाय प्रत्नँ व्वाजिन्त्सँव्वसायामा त्वा-
ऽऽहार्षमप्रति स्वशो याभिषुं शिवेन व्वचसा द्रापेऽअ-
न्धसो व्विश्वकर्मन्हविषा बलविज्ञाय स्थविरऽइन्द्र-
स्य वृष्णऽइन्द्रेमं पञ्चदिशो व्वयन्नाम व्वाजस्य नु
यद्दसँव्यच धाराऽइन्द्रस्य रूपमाया निषसाद मन्हास्य-
त्रिहदान्कः स्वित्सूर्य्यऽएकाकी प्रथ भीमं सन्दश। ३६।
कन्नाव्णोऽअकारिषं पञ्चस्वन्तस्ता नि। आ वायो आघा
सर्व्वे निमेषा यज्ञो देवानामिन्द्रव यन्ते देव्यग्निर्मूर्द्धा
अगीऽअपात्पितुन्त्वच्छिस्वब्यां पिन्वस्य मतौ नव। ३७।

ग्ने ब्रह्म व्वसुब्भ्यस्त्वोग्गेस्युद्दिवमत्यन्न्यामनस्ते यावा-
न्तम्प्रत्क्षथा व्विश्वेदेवासऽआतिष्ठेन्द्रमिद्दुदुत्यम्प्रजाप-
ते नादित्यै रास्नऽऋचो नामाश्विनौ च्छागस्य यु-
ङ्क्षा न्द्रसी दैव्यावद्ध्वर्य्यू ब्रह्मणस्पते इते इठं०ह मा-
ऽनाधृष्टा पुरस्तादिश्वासाम्भुवां स्वाहा प्प्राणेब्भ्यो लो-
मब्भ्यश्चतुर्व्विंशतिः । २४ । अथ व्यवसानाऽऽद्यनुदा-
त्ताः । युष्माऽइन्द्रः सवितुस्त्वेषा तेऽग्निज्ज्योतिर्व्व-
तङ्क्षणुतेन्द्रः प्प्राणोऽयँव्वेनो मरुत्वाँ २ ॥ ऽइन्द्र
महाँ२ ॥ ऽइन्द्रो यऽओजसा व्वाचस्पतिम्भुवसदन्वा-
ऽस्मिन्यास्पत्यस्व कुविदङ्ग व्विश्वकर्म्मा त्वा ह्वे पर-
मेष्ठी त्वा ह्वे स्वाहृतोन्वेरठं० हविष्टुवा रूपऽनृता-
वानँव्वैश्वानरस्य सुमतौ व्वैश्वानरो नऽऊतयेऽग्नि-
र्ऋषिर्य्यमाय त्वा समुद्द्राय त्वा समुद्द्राय त्वा ष-
ड्विंशतिः । २५ । अथ व्यवसाने कम्पः । सँव्वपाद्युप-
ह्वूतौ हर्य्यौः कम्पो जात्यः सठं०हिताऽश्याकूत्यै प्प्रयुजे
तप्सायन्नी मे वृहन्नसि यवोऽसि ह्वे माऽपः प्प्रपर्व्वतस्य-
मस्मा हिठं०सीद्दर्दऽअन्तरिक्षे निषसाद महाँ२॥ऽइ-
न्द्रो व्वज्रहस्तो यस्ते स्तनोऽभीमं सम्पदश । २६ ।
अथ व्यवसाने प्रथमाद्द्यौदात्तानि । आ वायो आघा
ये व्विनो ग्रहाऽऊर्ज्जोऽह्नुतयो यन्ते देव्यग्निर्मूर्द्धा
रेतो मूत्रमग्निस्त्र व्वैश्वानरस्य सुमतौ नव । २७ ।

अथ व्यवसानान्तोदात्ताः । गन्धर्वस्त्वोपहूताऽइहा-
गनेर्व्वा त्रिवत्सन्नादित्यैजनु दशमास्योऽग्निः पशुरथै-
तानष्टावासुते दक्षा युवाकवः स्योना पृथिव्यह्वानि
शमेकादश । ३८ । अथ व्यवसाने जात्यः । पुरा क्रू-
रस्य वेदोऽस्यापोऽअस्मानभि त्र्यं घृतेनाक्तावुपयाम-
गृहीतोऽसि ध्रुवोऽस्यस्मै वः पुरीष्योऽसृतꣳ सत्यम्मा-
धुस्व शुक्रस्त्वेषस्याग्ने त्वन्नोऽअन्तमऽआयुर्य्यज्ञेन कवि-
दङ्क्ष प्रजापतये त्वेमा नु यथेमामधि नोऽपेतऽएक-
विंशतिः । ३९ । अथ व्यवसाने द्विर्ज्जात्यः । कोऽसि
महाँ२॥ऽइन्द्रो नृवदाचर्षणिप्राः सहश्च नभश्च तपश्च
मश्च । ४० । अथ व्यवसाने द्वितीयाद्युदात्तानि । आदि-
त्यास्त्वत्सोम राजन्निन्द्रवायूऽइमेऽइन्द्राग्नीऽआगत-
सोमासश्चर्षणीधृतऽइन्द्र मरुत्वो जवो यः षोडशी स्तो-
मोऽग्निꣳ होतारन्नमोऽस्तु रुद्रेभ्यो हिरण्यया देवा
यदापः प्राणाय स्वाहा बृहस्पते ऽअतीन्द्र गोमन्नि-
न्द्रायाह्यग्निर्ऋषिर्गायत्रञ्छन्दः पयसो रेतो विंश-
तिः । ४१ । अथ व्यवसाने तकारान्तास्त्वमग्ने व्रत-
पाऽइदमापो बृहस्पतिसुतस्य विश्वकर्म्मन्हविषेन्द्र-
स्य वज्रोऽस्यामा जनस्योल्बन्नाभिर्म्मेऽष्टौ । ४२ । अथ
व्यवसाने नकारान्ताः । भद्रो मे सजोषाऽइन्द्रहरति
रुद्रौ भव यदा पिपेष पञ्च । ४३ । अथ व्यवसाने

प्रथमे द्वितीयान्त्समुदात्तानि । उरवाङ्कणोतु कुतस्त्वं द्विः । ४४ । अथ अवसाने ह्याद्युदात्ताः । एदग्न्या-स्मा द्विः । ४५ । अथान्त्यावसाने त्वाद्युदात्ताः । मा भेरग्ने दव्यायोऽन्यस्य स्वाहा यज्ञं व्वरुणस्योत्तम्भनं देवीरापः शुद्धा वोड्ढँ व्वावल्ले द्वितीयं स्वाङ्कृतोऽसि सोमः पवते यस्तेऽश्वसनिर्व्वेशीनान्त्वा व्वसवस्त्र-योदशाक्षरेण ये देवाऽअग्निनेत्रा व्वसवस्त्वा धूपय-न्त्वाकूतिमग्निँव्विष्णोः क्रमोऽसि चिदसि तयाऽऽयु-र्मे नवविंशत्या स्तुवत तन्तुना रायस्पोषेण रा-जन्यस्याधिपत्न्यसि व्वसुते गणेभ्यो धृष्णवे प्रम्नाय पर्यायोजस्य ज्येष्ठयज्ञ शब्दोकवर्चास्त्वा च ववसु चैका च चतस्रश्च स्थविष्ठेडितो बर्हिस्तस्मन्द्राः सुपेशसोषे दैव्या होतारा तिस्रो देवीस्तत्त्वोऽश्विनौ सरस्वती चत्वार्य्यग्निः स्विष्टकृतन्त्वामद्य प्राच्यै त्वाताय नक्षत्रेभ्यस्ताऽउभौ अवयो गायत्र्यै भूम्या-ऽआवृन्वातं प्राणेन विष्टतिन्नाभ्यैषोऽस्यैकाधिकः ष-ड्भिः । ४६ । अथान्त्यावसाने ह्याद्यनुदात्तानि । इषे त्वाऽग्नेस्तनूरिन्द्रघोषस्त्वा रक्षोहणं व्वलगहनं रक्षो-हणो वो मित्रस्य माऽऽक्रमने सऽउशिकस्त्वनापथे स्वाहैष ते निरृते त्वऽआविश्यऽजह्रीमारोहाग्निः पृथुः सविता प्रसवित्राऽपान्त्वाऽयम्पुरऽइयमुपरि स-

जूर्त्तुभिरनड्वान्वयः पृथिवी छन्दोऽग्निर्देवता-
ऽऽच्छन्दो विराडसि वयः प्राणश्च सत्यञ्च तिस्रो दधि-
श्च व्रीहयश्चाग्निश्च द्वे मित्रश्च चतस्रोऽग्निर्देवं पष्ठ-
वाट् च निरश्मिभ्यस्त्वा प्रथममग्नये स्वाहा हिङ्का-
राय प्राणायाङ्गेभ्यः पृथिव्यै धूम्रान्वसन्ताय पष्ठवाहो
विराजे प्रजापतये पुरुषान्मयुः प्राजापत्यः पुरुष-
स्तृगश्चन्द्रमसो मशकान्केशैर्मरुतां स्कन्धा नृत्ताय
सूतश्छतये स्तेनहृदयं पञ्चपञ्चाशत् । ४७ । अथा-
न्त्यावसाने द्युद्रीदात्तानि । एष ते रुद्रभागः स्वराड-
सि सपत्नहाऽग्नये त्वा गायत्रच्छन्दसँव्वसवस्त्वा छन्दसाव-
न्तु राड्गसि नृपदे वेट् प्रथमं कृष्णग्रीवाऽआग्नेयाऽउ-
न्नतऽऋषभः कृष्णा भौमाः प्रथमद्वितीयोक्ताः सञ्चरा
धूम्रा बभ्रुनीकाशाः प्रजापतये च सौरी बलाकाऽए-
ण्यह्नो वर्षाहूर्ऋतूनामाखुः श्वित्रऽआदित्यानाम्पृष-
ताँव्वनिष्टुना नदीभ्यः पौञ्जिष्ठं सन्धये जारमुत्सादे-
भ्यः कुब्जम्भायै दार्वाहारम्मन्यवेऽयस्तापँय्यमाय यु-
मस्वं सरोभ्यो धैवरमक्षराजाय कितवं प्रतिश्रुत्का-
याऽअर्तनमग्नये पीवानमष्टाविंशतिः । ४८ । अथा-
न्त्यावसाने द्व्यंशौ जात्यः । कुक्कुटोऽसि जनयत्यै त्वा-
ऽग्ने व्रतपतऽएष ते गायत्रो ध्रुवोऽसि पृथिवीन्देवान्द्र-
वँव्वसवस्त्वाऽदितिष्ट्वाऽयन्दक्षिणा सहस्रस्य प्रमा न-

म्ऽआध्ववेऽइमा मे व्वाजस्य विततञ्च स्रुचश्च देवो-
ऽअग्निर्य्यते स्वाहा काय द्वितीयाऽग्नये स्वाहाऽऽयु-
र्य्यज्ञेनैकस्मै रोहितो धूम्ररोहितः शुद्धवालस्तृतीयो-
ता: सञ्चराः सुपर्णाः पार्ज्जन्यः खड्गो व्वैश्वदेवोऽग्नेः
पङ्क्तिर्ब्रह्मणे ब्राह्मणं तपसे कौलालमर्म्मेभ्यो ह-
स्तिपस्वीभत्सायै पौल्कसमेकान्निंशत् । ४८ । अथान्त्या-
वसाने कल्पः । पृथिवि देवयजन्यदित्यै व्युन्दनम-
ग्ने वः समुद्रङ्गच्छ प्रथमः स्वाङ्कृतोऽसि स्वर्णं चतुः
कल्पाइडस्पदे तनूनपात्सरस्वतीन्नराशंसन्न द्वि-
कल्पो दुरो दिशो व्वाजाय स्वाहा सोमाय कुलुङ्ग-
ऽइन्द्राग्न्योः पङ्क्तिरग्नयेऽनीकवतेऽग्नये गायत्राय
नश्मीय पूँस्त्वं सुमित्रिया नोऽष्टादश । ५० । अथा-
न्त्यावसाने कल्पो जात्यः । भूताय त्वा दिविविष्णु-
र्द्वितीयः सिँह्यसि तेजोऽसि तेजो मयि धेह्यब्रह्म-
न्नश्वस्तूपरः शिल्पा व्वैश्वदेव्यऽएताऽऐन्द्राग्ना
द्वितीयः कृष्णग्रीवाऽआग्नेयः कृष्णग्रीवा दश ।
५१ । अथान्त्यावसाने द्विर्ज्जात्यः । अस्कन्नमद्याग्ग्र-
यणोऽसीदमुत्तरादाशुश्शिष्टस्समुद्रोऽसि नभस्वान्पृ
श्निस्तिरश्चीनपृश्निस्तृतीयः कृष्णग्रीवाऽआग्नेया-
ऽअन्यत्रापोऽर्द्धमासानामिन्द्रस्य वक्षोडो नव । ५२ ।
अथान्त्यावसाने त्रिर्ज्जात्यः सिँह्यसि मित्रावरुणा-

श्यान्त्वा षड्जाश्यो मघवे त्वाऽग्नये त्वा मह्यं चतुरो जाश्यः पृथिव्याः सधस्थाच्छिष्टदसि प्रथमा द्वितीयैस्त्वा-न्नो जाश्या मघवे स्वाहा भारन्द्हिम्नर्नव । ५३ । अ-थान्त्यावसाने नकारान्ताः । मनो मे प्रथमाऽग्नयेऽनीक-वते ऽवसन्नाय कपिञ्जलानात्समुद्राय शिशुमारा-न्त्सोमाय हर्ठ॰सानग्नये कुटरून्त्सोमाय लवानग्न्के पारावतान्वसुभ्यऽऋश्यानीशानाय परस्वते दश । ५४ ।अथ निरवसाने ह्याद्युदात्ताः । नमो वऽइन्द्रश्च मरुतश्च विश्वे देवाश्चसंसोऽवेष्टा दन्दशूकाह्वयमु-दीचीमारोह मा च्छन्दऽएकया स्तुवतैवच्छन्दो बभ्लु-शाय रोहिताय कल्माषोष्णीषिणो विस्रजध्वः सभा-भ्यो गणेभ्यस्तक्षभ्योऽश्वेभ्यो ह्रस्वाय वनन्याय विं-शतिः । ५५ । अथ निरवसाने ह्यनुदात्ताः ।प्राणाय मे प्रोह्यमाणः सोमः पूषा पश्चात्वैराजैतस्य प्रती-चीमारोह मूर्द्धा वयो नवभिरस्तुवत रश्मिना स-त्याय प्रतिपदस्यग्निजमद्ग्न तपसत्याऽश्व द्वादश । ५६ । अथ निरवसाने कम्पः । कृष्णोऽसि मधुमती-न्नः परमेष्ठ्यभिधीत इति त्रिः । ५७ । अथ निरव-साने कम्पो जात्यः । समुद्रोऽस्यग्निरेकाक्षरेण युवानाम्भागस्थ्रः । ५८ । अथ निरवसाने ह्येको जा-त्यः । विश्वस्वे देवा नवभिरस्तुवत नमो हिरण्यबाहु-

वे नमः कपर्द्दिने स्त्रुत्याय त्वाष्ट्याय माध्यीय सप्त । ५८ ।
अथ निरवसाने द्विर्ज्जीत्यः । उशिगसि वृष्ण्ऽऊर्म्मि-
उर्य्येष्ठाय व्विलिम्पने व्रज्याय पञ्च । ६० । अथ नि-
रवसाने त्रिर्ज्जीत्यः । सोभ्याय कूप्याय चतुरग्ने
त्वीगोऽसि व्वसूनाम्भागोऽसि सिकत्याय शुष्क्याय
षट् । ६१ । अथ निरवसाने मध्यावसाने द्वितीयश्च-
स्यऽस्यग्ने व्वाजजिद्विभूरस्यादद्दे रावाऽसि द्विर्ज्जी-
त्यमिन्द्राय त्वा वृहद्दते पञ्च । ६२ । अथ चतुरवसा-
ने त्र्याद्युदात्ताः । प्रत्युष्टर्ठ० रक्षऽइन्धानास्त्वा ज्यम्ब-
कन्त्वामान्युग्मसि माऽहिर्भूर्म्मा पृदाकुरग्ने पवस्वा-
दृग्ध्यस्य व्वाजो कनिकन्नद्देवोऽसीन्द्रस्यौजस्य
स्वाहा रुद्रायैकादश । ६३ । अथ चतुरवसाने त्र्या-
द्युदात्ताः । अग्नीषोमयोरुज्जितिं द्विकस्पाः सजूर्दे-
वेनाऽऽयुर्ठ०स्युग्ग्नीषोमाभ्यात्त्वा त्वन्तं वृषसु-
त्तिग्मतेजसा युञ्जान्देवस्याहमग्रयमो देवस्य त्वा
पृथिव्याः सुपर्णोऽसि व्विराड्ज्योतिरिमर्ठ० सा-
हस्त्रिस्तो व्वायोः पूतः पुनन्तु मा पितरः सँव्व-
त्सरोऽस्यभिग्गन्द्वोभयोर्न्नर्जवे त्वा हिरण्मयेन पा-
त्रेणाति द्वाविंशतिः । ६४ । इति महर्षियोगियाज्ञव-
ल्क्यकृता मनःस्वारशिक्षा समाप्ता ॥

# अथ प्रातिशाख्यप्रदीपशिक्षा-ऽऽरभ्यते ॥

---

हेरम्बं विघ्नहर्तारं प्रणमामि सरस्वतीम् ॥ ययोर्नमनमात्रेण विघ्नसङ्घो विनश्यति ॥ १ ॥ प्रातिशाख्यं च शिक्षाश्च सम्यगालोच्य यत्नतः ॥ वैदिकानां सुबोधाय सम्यक्पाठस्य सिद्धये ॥ २ ॥ सदाशिवतनूजेन बालकृष्णेन धीमता ॥ प्रातिशाख्यप्रदीपाख्या शिक्षा सम्यङ्निरूप्यते ॥ ३ ॥ अथ वेदाध्ययनप्रकारः । तत्र याज्ञवल्क्यः । प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ॥ सावित्रीं चानुपूर्व्येण ततो वेदान्समारभेत् ॥ १ ॥ हस्तौ तु संयतौ धार्य्यौ जान्वोरुपरि संस्थितौ । गुरोरनुमतिं कृत्वा पठेन्नान्यमतिर्भवेत् ॥ २ ॥ ऊरुभागे तृतीये तु करन्यस्याथ दक्षिणम् ॥ प्रसन्नमानसो भूत्वा किञ्चिन्नम्रमधो मुखः ॥ ३ ॥ कूर्मोऽङ्गानीव संहृत्य हस्तदृष्टिदृढमनः ॥ स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः ॥ ४ ॥ नाभ्याहन्यान्न निर्हन्यान्न गायेन्न च कम्पयेत् ॥ यथादावुच्चरेद्वर्णांस्तथैवैतान्समापयेत् ॥ ५ ॥ निवेश्य दृष्टिं हस्ताग्रे वेदार्थ-

मनु चिन्तयेत् । सम्यगुच्चारयेद्वर्णान्हस्तेन च मुखेन-च ॥ ६ ॥ स्वरस्यैव तु हस्तस्य द्वावेतौ युगपत्स्थितौ ॥ हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ॥ ७ ॥ न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः ॥ गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ॥ ८ ॥ मुत्नुनैंका स्फुटो दण्डी स्वस्तिको मुष्टिकाकृतिः ॥ एते वै हस्तदोषाः स्युः परभृस्येति सप्तमः ॥ ९ ॥ अथ करचालनक्रमस्तत्रैव अङ्गुष्ठस्योत्तरे पर्व्वे तर्ज्जन्युपरि यद्भवेत् । प्रादेशस्य तु यो देशस्तस्मात्तं चालयेत्करम् ॥ १० ॥ उदात्तं भ्रुवि पातेन प्रचयं नासिकाग्रतः । हृत्प्रदेशेऽनुदात्तं तु तिर्य्यग्गात्यादिकाः स्वराः ॥ ११ ॥ स्वरिते त्र्यङ्गुलं विद्यान्निपाते तु षडङ्गुलम् ॥ उत्थाने तु नवाङ्गुल्यमेतच्चालनस्य लक्षणम् ॥ १२ ॥ तथा च प्रातिशाख्ये ॥ हृदयानुशसो मूर्द्धन्युदात्तः श्रुतिमूले स्वरितइति ॥ अथ स्वरविचारः । तथा चोक्तम् । स्वरउच्चः स्वरो नीचः स्वरः स्वरित एव च ॥ स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरमिति ॥ अथोदात्तानुदात्तस्वरितस्वराणां लक्षणान्युच्यन्ते । तथा च प्रातिशाख्ये । उच्चैरुदात्तः ॥ १ ॥ ऊर्ध्वभागे निष्पन्नःस्वरउदात्तसञ्ज्ञः स्या-

अधोभागे निष्पन्नः स्वरोऽनुदात्तः स्यात् । यथा । आर्षेयऽऋषीणाम् । अनुदात्तप्रदेशाः । "उदात्ताच्चानुदात्तं स्वरितम् ॥ ४ ॥ उदात्तादक्षरात्परं व्यञ्जनव्यवहितमनुदात्तमक्षरं स्वरितं भवति । यथा स्वाहा हिम । हि ष्म ॥ निहितमनुदात्तस्वरितपरम् ॥ ५ ॥ अनुदात्तमापद्यते स्वरितं उदात्तपरं स्वरित परं च । उदात्तपरे यथा स्वाहा सोमाय । स्वर्ग्यायेति स्वः ग्याय । प्रसवेऽश्विनोः । परमेष्ठ्यभिधीतः । सुची वेति । स्वरितपरे यथा स्वाहा स्वर्णाङ्कः ॥ इत्येवमादयः ॥ "उभयवान्स्वरितः ॥ ६ ॥ ऊर्ध्वाधो भागे निष्पन्नःस्वरः स्वरितसञ्ज्ञः स्यात् । यथा स्वः । धान्यमसि ॥ अथ स्वरितस्यैवान्तर्भेदा अष्टौ स्वरा उच्यन्ते ॥ तथा च याज्ञवल्क्यः । अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव च लक्षणम् ॥ जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथाऽपरः ॥ १३ ॥ तैरोव्यञ्जनसञ्ज्ञश्च तथा तैरोविरामकः ॥ पादवृत्तो भवेत्तद्वत्ताथाभाव्य इति स्वराः । १४ । इति । तत्र प्रत्येकलक्षणमुच्यते । तथा च प्रातिशाख्ये ॥ एक पदे नीचपूर्वः सयवो जात्यः ॥ एकस्मिन्पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वा सहितो जात्यः स्वरः प्रत्येतव्यः । नीचपूर्व इति स्म्भवद्धि-

क्षेत्राणाम् । अपूर्वोऽपि भवति । नीचपूर्वो यथा । धान्यमसि । कन्याऽइव । अपूर्वो यथा स्वर्द्देवेषु । तथा च याज्ञवल्क्यः । एकपदे नीचपूर्वः सयवो जात्यइष्यते ॥ अपूर्वोऽपि परस्तद्वद्धान्यं कन्या स्वरित्यपि ॥ १५ ॥ उदात्तादयः परे सप्त ॥ ७ ॥ उदात्तादयः परे सप्त स्वराः प्रत्येतव्याः । अभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जनतैरोविरामपादवृत्तताथाभाव्याः ॥ त्रयो नीचस्वरपराः ॥ ८ ॥ अभिनिहितक्षैप्रप्रश्लिष्टा नीचस्वरपराः ॥ एदोद्भ्यामकारो लुगभिनिहितः ॥ ९ ॥ एकारौकाराभ्यामुदात्ताभ्यामकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति । यथा तेऽवसरसाम् । तेऽवन्तु । वेदोऽसि । सुपोऽसि । तथा च याज्ञवल्क्यः । एओ आभ्यामुदात्ताभ्यामकारो निहितश्च यः ॥ अकारो लुप्यते यत्र तं चाभिनिहितं विदुः ॥ १६ ॥ अस्यापवादः । न देशेऽभवति ॥ १० ॥ देशइत्ययमेकारः अभवदित्यस्याकारे लुप्तेऽप्यभिनिहितस्वरितो न भवति । यथा देशेऽभवत् ॥ युवर्णौ यवौ क्षैप्रः ॥ ११ ॥ इस्य उस्य यु यूवर्णौ उदात्तौ अनुदात्ते स्वरोदयौ यकारवकाराभ्यां यथासङ्ख्येन युक्तौ यदा तदा क्षैप्रस्वरो भवति । यथा निरऋ्यकम् । त्र्यम्बकम् । व्याजी अर्वा-

न्। व्याऽज्यर्व्वन्। नु इन्द्र। न्विन्द्र। इ ऋग्मः। ईर्म्नः। तथा च याज्ञवल्क्यः। इवर्णौ यदोदात्तावापद्येते यत्वं क्वचित्॥ अनुदात्ते परे नित्यं विद्यात्क्षैप्रस्य लक्षणम्॥ १७॥ इवर्णोऽभयतो ह्रस्वः प्रश्लिष्टः॥ १२॥ ह्रस्वइकार उदात्तः परश्च ह्रस्वइकारोऽनुदात्तस्तयोः परस्परप्रश्लिष्टे प्रश्लिष्टस्वरो भवति। यथा अभि इन्धताम्। अभीन्धताम्। सुवीव। तथा च याज्ञवल्क्यः। इकारो दृश्यते यत्र इकारेणैव सँयुतः॥ उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः॥ १८॥ स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः॥ १३॥ उदात्तात्पूर्वमात्परो यः स्वरो व्यञ्जनयुतः स तैरोव्यञ्जनसञ्ज्ञकः स्वरो भवति। यथा इडे। रन्ते। तथा च याज्ञवल्क्यः। उदात्तपूर्वं यत्किञ्चिद्व्यञ्जनेन च सँयुतः॥ एष सर्वबह्वृचारस्तैरोव्यञ्जनसञ्ज्ञकः॥ १९॥ अवग्रहस्तैरोविरामः॥ १४॥ उदात्तावग्रहस्तैरोविरामसञ्ज्ञकः स्यात्। अयं च समस्तपदेषु भवति। अवग्रहवचनात्। अवग्रहाभावे तु तैरोव्यञ्जन एव। यथा गोपताविति गो। पतौ। यज्ञपतिमिति यज्ञ। पतिम्॥ तथा च याज्ञवल्क्यः। अवग्रहात्परो यस्तु स्वरितः स्यादनन्तरम्॥ तैरोविरामं तं विद्या-

तः ॥ १५ ॥ स्वरयोरन्तरं विवृत्तिरुच्यते । तया ल-
क्ष्यतइति विवृत्तिलक्षणः स पादवृत्तसञ्ज्ञो भवति ।
विवृत्त्या व्यवहित इत्यर्थः । यथा ध्रुवा असदन् । ध्रु
वाऽअसदन् । का ईम् । काऽईम् । तथा च याज्ञव-
ल्क्यः । स्वरे च स्वरिते चैव विवृत्तिर्दृश्यते यदि ॥
पादवृत्तो भवेत्स्वारः श्विनऽआदित्येति निदर्शनम् ॥
२१ ॥ स्वरयोरन्तरे काले विवृत्तिर्यत्र दृश्यते ॥ स स्वा-
रः पादवृत्तः स्यात्काऽईमिति निदर्शनम् ॥ २२ ॥ उ-
दात्ताग्रो न्यवग्रहस्ताथाभाव्यः ॥ १६ ॥ उदात्तादिरु-
दात्तान्तो नीचावग्रहस्ताथाभाव्यसञ्ज्ञकः स्वरो भव-
ति । यथा तनूनप्त्रऽइति तनू । नप्त्रे । तनूनपादि-
ति तनू । नपात् । तथा च याज्ञवल्क्यः । उदात्तान्त-
रयोर्मध्ये भवेन्नीचस्त्ववग्रहः ॥ ताथाभाव्यो भवेत्क-
म्पस्तनूनप्त्रे निदर्शनम् ॥ २३ ॥ केषांचिन्मते ना-
ष्टमस्तु ताथाभाव्यः, कम्परूपस्य ताथाभाव्यस्य वाजस-
नेयिनां संहितापाठे निराकृतत्वात् । उक्तं च माध्य-
न्दिनशिक्षायाम् । औज्जिहायनकैर्माध्यन्दिनमतानु-
सारिभिः । अवग्रहो यदा नीचउच्चयोर्मध्यतः क्वचित् ॥
२४ ॥ ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥
पदपाठे भवत्येव कम्पो नाम स्वरस्तथा ॥ २५ ॥ इत्यष्टौ

स्वराः सोदाहरणा व्याख्याताः ॥ ऋजुं निहत्य प्रचि-

हन्यतऽउदात्ते ॥ १७ ॥ ऋजुं स्वरितस्वरं निहत्य ह-

स्वमनुदात्तवत् । ततो ऽत्यन्तं निहन्यते नीचैः क्रि-

यते जात्याभिनिहितक्षैप्रप्रश्लिष्टा उदात्ते परभूते ।

यथा स्वः द्यौरिव । स्वर्द्यौरिव । प्रसवे अश्विनोः ।

प्रसवेऽश्विनोः । नि अश्विनाम् । न्यश्विनाम् । स्रुचि

इव । स्रुचीवेति । उदात्त इति कस्मात् । धान्यमसि ।

वैष्णव्यौ । प्रचयस्वरलक्षणमाह । स्वरितात्परम-

नुदात्तमुदात्तमयमेकमनेकं वा ॥ १८ ॥ स्वरितात्परम-

नुदात्तमेकमनेकं वाऽक्षरमुदात्तवत् । एकश्रुत्या उच्चा-

रणीयं स्यात् । अयमेव प्रचयः प्रचितः प्रचो निचित

उदात्तमय इति वैदिकैर्व्यवह्रियते । हस्तं तु नासिकाग्र-

सम्मितं कृत्वा प्रदर्शनीयः । प्रचयन्नासिकाग्रत इति-

याज्ञवल्क्यशिक्षावाक्यात् । यज्ञपतिः । अघाऽऽशंसऽइषे-

यः ॥ नोदात्तस्वरितोदयम् ॥ २० ॥ स्वरितात्परमनु-

दात्तं उदात्ते स्वरिते वा परे प्रचयं न स्यात् । इडे०

हस्व मा । तननिम विष्णो । सादन्त्यं विदथ्यम् ॥

उदात्तवानुदात्तः । स्वरितवान्स्वरितः । यत्र स्व-

रद्वयस्य प्राप्तौ सत्यां विप्रतिषेधऽउत्तरस्वरस्व-

द्भवति । यथा सूनवेऽग्ने । अदस्युत्येऽवसे ॥

स्वरविधायकं शास्त्रम् ॥ अथ स्वरसन्धिरभिधीयते ॥
सꣳहितायाम् । १ । अधिकारोऽयम् । पदान्तप-
दाद्योः सन्धिः । २ । यदत्र सन्धिकार्य्यमुच्यते तत्प-
दान्तपदाद्योः स्यात् ॥ स्वरे भाव्यन्तस्थाम् । ३ । अ-
कारवर्ज्यो भावी । इत्यनेन सूत्रेण भाविसञ्ज्ञोक्ता ।
ते भाविसञ्ज्ञका इ उ ऋ लृ स्वराः स्वरे परे अन्त-
स्था यवरलाः क्रमश आपद्यन्ते । उदाहरणं यथा पुना-
न्यच्छिद्रेण । स्वाज्यर्व्वी । व्वेत्वाज्यस्य । व्विभूर्म्मा-
त्रा प्रभूः पित्रा । लृकारोदाहरणं नास्ति संहितायां-
म् ॥ सन्ध्यक्षरमयवायावम् । ४ । सन्ध्यक्षरसञ्ज्ञकाः
स्वराः एओ ऐऔ स्वरे परे अय् अव् आय् आव् ए-
तानादेशानापद्यते । यथा इडऽएहि । अयादेशे
कृते "यवयोः पदान्तयोः स्वरमध्ये लोपः । ५ । वयोः
स्वरयोर्मध्ये विद्यमानयोः पदान्तयोर्य्यकारवकारयो-
र्लोपः स्यात् । सरस्वत्याऽइन्द्राय । व्विष्णोऽएते इति
स्थिते अवादेशे कृते लोपे च पूर्वसूत्रेण प्राप्तेऽग्रि-
मसूत्रेण निषेधः कृतः ॥ न वकारस्यासस्थान एकेषा-
म् । ६ । स्वरयोर्म्मध्ये विद्यमानस्य वकारस्य पदान्त-
स्य लोपो न स्याद्भिन्नस्थाने स्वरे परे, यथा व्विष्णवे-
ते । आनन्दनन्दावाण्डौ । असस्थानइति किम् । व्वि-
ष्णोऽउरुगाय । ऊरू पादाऽउच्येते ॥ कारव्यऽकारे [illegible]

सम् । ७ । अत्र स्वरऋकारे परे ह्रस्वं स्वर
द्यते । त्वऽऋभुमते ॥ सिद्धं० सवर्णे दीर्घम् ।
सिमृसञ्ज्ञकः स्वरः सवर्णे परे पूर्वः परस्य एक
मापद्यते । यथा नारात्तये । स्वाध्यामये । यो
म् । पचन्तूये । अत्र स्वरे भाव्यन्तस्थामिति
विप्रतिषेधसूत्रेणानेन परत्वादिदमेव भवति ॥ अ
दिवर्णऽएकारम् । ६ । अत्राप्यात्परइवर्णापूर्वः प
कारमापद्यते । नयेन्द्राय । एदम् ॥ उवर्णे ओ
म् । १० । अत्राप्यात्परउवर्णः पूर्वस्य एकस्मोका
पद्यते । इन्द्रोर्ज्जम् । प्रोहासि ॥ सन्ध्यक्षर ऐ
रौकारौ । ११ । अत्राप्यात्स्वरात्परं सन्ध्यक्ष
रतौ ऐकारौकारौ आपद्येते । यथा आजायैष
इन्द्रेणैन्द्रम् । ओजिष्ठौजिष्ठः । प्रौक्षन् ॥ समुद्र
मंस्वेमंस्वोऽश्नन्निति च । एते निपात्यन्ते । अन्य
प्राप्तस्य अन्यथोच्चारणं निपातनम् । यथा अपां
समुद्रस्येमन् । अपान्त्वेमन् । अपान्त्वोऽश्नन् ॥
परकालः पूर्व्वकाले पुनः । १२ । जातः परकाल्लो
धिः पूर्व्वकाले विधौ प्राप्ते सत्यसिद्धः स्यात् । तऽ इ
मुवन्तु । पादाऽउच्यते । अराध्याऽएदिधिषुःप
म् । राध्याऽ अटत्तः । अत्र यवयोः पदान्तयोरित्य
परकालत्वात्तस्मिञ्ज्जाते पूर्वकालं यथायथं प्राप्तं

न्विकार्यं न भवति ॥ आरम्भकारोऽष्टकात् । १३ । अष्टकात्परश्चकारः पूर्वस्य एकारमापद्यते । कस्य अकार इत्यस्यापवादः । यस्यावश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स तस्यापवादः, यथा स्वपनमार्त्यै ॥ एदोद्भ्यां पूर्वमकारः । १४ । एदोद्भ्यां परो अकारः पूर्वस्य एकारमेकारं ओकारं वाऽऽपद्यते । एतत्प्रकरणे यानि विसर्गान्तानि पदानि तेषां “सर्वो अकार ओकार” इत्यनुवर्त्तमाने “अकारे चे”ति वक्ष्यमाणसूत्रद्वयेन च ओकारान्तत्वम् । उदाहरणं यथा अग्नयेऽनीकवते । अग्नेर्व्यायोऽसीतम ॥ प्रकृतिभाव ऋक्षु । १५ । ऋक्षु नियताक्षरच्छन्दस्सु मन्त्रेषु एदोद्भ्यामपरो अकारः प्रकृत्या भवति । एदोद्भ्यामित्यस्यापवादः । यथा गर्भेऽअन्तः । वायोऽ अस्मिन् ॥ यजुःषु च । १६ । अनियताक्षरेषु अविशेषेण एकारौकाराभ्यां परः अकारः पूर्वस्य एकारमोकारं वाऽऽपद्यते । यथा अग्रेपुवोऽग्रे । वसेऽपानः । चकाराद्यत्रापि क्वचित् । योऽसावादित्ये पुरुषः सोऽसावहम् ॥ का अणोती सदना होतारा ज्या स्वधा पृथिवी प्रतिमिमसदन्त्स्यामाकर्मीडिमियमनस्तादुतास्विषु ॥ १७ ॥ कादीनि नव पदानि यथासङ्ख्यं इमादिषु नवसु परेषु प्रकृत्या भवन्ति । का-

ऽइदम् । ध्रुवाऽअसदन् । ऊतोऽअश्याम । सदनाऽअका-
र्म होताराऽऊर्द्धम् । ज्याऽइयम् । स्वधाऽअवस्तात् ।
पृथिवीऽउत द्यौः । प्रतिमाऽअस्ति ॥ प्रगृह्यं च स्व-
रे ॥ १८ ॥ प्रगृह्यसञ्ज्ञकं पदं स्वरे परे प्रकृत्या
भवति । इन्द्राग्नीऽअपात् । इन्द्रवायूऽइमे । शिप्रे-
ऽअवेपयः । अस्मेऽआरात् । त्वेऽइषः । अमीऽअ-
वन्यः ॥ उकारोऽपृक्तोऽस्पर्शात् ॥ १९ ॥ पूर्वेण भावे
नियमार्थं वचनम् । अपृक्त उकारः स्पर्शात्परत्वाभाव
एव प्रकृत्या । एतवाऽउऽअग्नि । अस्पर्शात्किम् । त-
द्विन्द्रो । सम्वतद्दधामि ॥ न रोदसीमे ॥ २० ॥
रोदसी इत्येतद्द्विवचनान्तं पदमपि प्रकृत्या न भव-
ति इमे शब्दे परे । रोदसी मे शये ॥ इत्यष्टौ स्वराः
सोदाहरणा व्याख्याताः। अथाङ्गुलिभिः प्रदर्शनीयवि-
षया व्याख्यायन्ते । तत्र व्यञ्जनानामिमे धर्माः सन्ति
एतस्मात्कारणादादौ व्यञ्जनसन्धिरुच्यते । तकारव-
र्गश्चकारवर्गे चकारवर्गम् । १ । तकारादयः पञ्च च-
कारादि पञ्चान्यतमे वर्णे परे चकारादीन्यापद्यन्ते ।
अत्र स्थान्यादेशयो र्यथासङ्ख्यम् निमित्तकार्यिणोस्तु
न "शकारे चे"त्यस्याप्येतत्। सूत्रशेषत्वेन निमित्तानां
परत्वात् । योगविभागस्तु तावत एवोत्तरसूत्रेऽनुवृ-
त्त्यर्थः । यच्चाहम् । आच्छच्छन्दः । अनूज्जेषम् । अच्छू-

स्नयतु ॥ शकारे ॥ २ ॥ शकारे च परे तवर्गश्चवर्गमापद्य-
ते । अदित्याऽश्चश्नुभिः ॥ परश्चास्पर्शपरश्छम् ॥ ३ ॥
तवर्गात्परः शकारश्छकारमापद्यते स्पर्शपरो न चेत् ।
चात्पूर्वश्चवर्गम् । यच्छृद्दे । कूश्माऽञ्छकपिवाडैः । अस्प-
र्शपरः किम् । पूर्वसूत्रोदाहरणं बोध्यम् ॥ नुः । ४ ।
अधिकारोऽयम् ॥ अनुनासिकमुपधा । ५ । अयम-
पि तथा ॥ चछयोः शम् । ६ । चकारे छकारे च प-
रे नकारः शकारमापद्यते । उपधा चानुनासिकम् ।
ताँश्चकर्क । जटायां अवँश्छवित्स ॥ तथयोः सम् । ७ ।
तकारे थकारे च परे नकारः सकारमापद्यते । उप-
धा चानुनासिकम् अस्माँस्ते । पशूँस्तान् ॥ दधन्वा-
न्स्वत्रान्यकारे लोपम् । ८ । अनयोर्नकारो यकारे प-
रे लोपमापद्यते । नाचानुनासिकोपधा । उक्तं च व-
सिष्ठशिक्षायाम् । स्वराणामानुनासिक्यं प्रतिजानन्ति
सर्वदा । वर्जयित्वा तमाकारं यत्र लोपो विधीयते ।
दधन्वा यः । स्ववायातु ॥ रयिष्ठधे च । ९ । रयिष्ठधे
परे नकारो लोपमापद्यते । पीवोऽअन्नारयिष्ठधः ॥
नॄन्पकारे विसर्जनीयम् । १० । नॄनित्ययं नकारः प-
कारे परे विसर्जनीयमापद्यते । अनुनासिका चोप-
धा । नॄँः पाहि ॥ सतॄन्परिधीन्ऋतून्वनस्पतीन्स्व-
रे रेफम् । ११ । एतेषां नकारः स्वरे परे रेफमाप-

द्यते । अनुनासिका चोपधा । भतॄँ१ ॥ रप । परि-धीँ१ ॥ रपोर्षु । क्रतूँ१ ॥ रनु ॥ एते ह्येकादशमात्रिका भवन्तीति मात्राग्रहणेनोक्तम् ॥ आकारोपधो यकारम् । १२ । आकारोपधो नकारो यकारमापद्यते स्वरे परे अनुनासिका चोपधा । याँ २ ॥ ऽआवह: । अत्र यवयोरित्यनेन लोपेऽपि "न परकाल: पूर्वकाले पुन"-रित्यनेन तस्यासिद्धत्वात्मकरणान्तरस्थत्वाच्चानुनासिकवर्ज्जनं न भवति ॥ स्पर्शोऽपञ्चम: स्वरघौ तृतीयम् । १३ । प्रतिवर्गमाद्या: स्वरे घिसञ्ज्ञके च परे वर्गतृतीयमापद्यन्ते । स्टुभगित्या । वेडसि । तदि-द्दासम् । सञ्ज्ञोदाहरणं । अनुष्टुबेव: । करर्गसि । द्राडयन्ती । तस्माद्यज्ञात् । त्रिष्टुब्जगती । अप-ञ्चम: किम् । युङ्ङसि । अस्मिन्यज्ञे ॥ पञ्चमे पञ्चमम् । १४ । अपञ्चम: स्पर्श: पञ्चमे स्पर्शे परे पञ्च-ममापद्यते । वाङ्माच्या । व्याङ्माच्या । युन्मे च्छिद्रम् ॥ हस्य तस्मात्पूर्वचतुर्थम् । १५ । अपञ्चमात्परो हकार: पूर्वस्य चतुर्थमापद्यते चात्पूर्वस्तृतीयम् । स्वा-ध्युत: । समस्तुष्टोद्वृद: । अवाड्ढव्यानि । अपञ्चमा-त्किम् । जीमूताग्न्हृदयौपशेन ॥ "अनुस्वारठं० रो-ऽष्मसु मकार: । १६ । मकारो रेफे ऊष्मसु च परे-ष्वनुस्वारमापद्यते । "अनुस्वारस्य ठं०मित्यादेश: प्रा-

षसन्धरेफेषु" । तेषामनुस्वारादीनामङ्गुलिभिः प्रकारो दर्शितवान्याज्ञवल्क्यः । मुष्ट्याकृतिर्मकारे तु नकारे तु नखग्रहः । ककारान्ते टकारान्ते ङणोऽथोऽङ्गुलिनामनम् । १ । पञ्चाङ्गुल्यं पकारे तु तकारे कुण्डलाकृतिः । ऊर्ध्वक्षेपाच्च यो ज्ञास्यादधः क्षेपाच्च यो भवेत् । २ । एकैकामुत्क्षिपेदोरः स्वरिते तूभयं क्षिपेत् । स्वरितं यद्भवेत्किञ्चित्स्वकारोऽग्रकं ततः । दीर्घं वा यदि वा ह्रस्वं निक्षेपदुभयोरपि ॥ ३ ॥ जात्ये च स्वरिते चैव यकारो दृश्यते यदि ॥ कर्त्तव्यस्तूभयोः क्षेपो व्यायव्यैरिति दर्शनम् ॥ ४ ॥ तथा च लघुमाध्यन्दिनीयशिक्षायाम् । कनिष्ठामोचनं कुर्य्यान्नीचे च प्रचये सति । नमः कूप्याय प्रथमो द्वितीयो जाग्रतस्तथा । १ । तर्जनीमोचनं कुर्यादुदात्ते तु विसर्गके । देवो घर्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपेत् । २ । अग्नौ मध्यौ भवेन्मध्यं स्वारे दीर्घे कनिष्ठिकाम् । उभयोरपि ह्रस्वे च वकारे स्वरिते सदा । ३ । दीर्घेऽपि चोभयोः क्षेपइति शास्त्रव्यवस्थितिः । अस्यार्थः । मकारे मुष्टिः । नकारे अङ्गुष्ठेन तर्जनीनखग्रहणम् । ककारे टकारे ङकारे, णकारे पदपाठे इषत्वस्त्वित्यादौ च तर्जनीमधो नामयेत् । पकारे पञ्चाङ्गुलिमेलनम् । तकारे कुण्डला-

रे विसर्गे तर्जन्याः प्रसारणम् । अनुदात्तात्प्रचयाच्च प-
रे कनिष्ठिकायाः प्रसारणम् । ह्रस्वात्स्वरितात्परे चो-
भयोस्तर्जन्यकनिष्ठिकयोः प्रसारणम् । दीर्घात्स्व-
रितात्परे विसर्गे कनिष्ठिकायाः क्षेपः । वकारयुक्ताद्दी-
र्घादपि परे चोभयोः । यकारयुक्ताज्जात्यस्वरिताद्दी-
र्घादप्युभयोः । इत्यङ्गुलिप्रदर्शनीयविषया निरूपि-
ताः ॥ अनुस्वारविषयो व्याख्यायते ॥ अनुस्वारꣳ रो-
ष्मसु मकारः । १ । मकारोऽनुस्वारमापद्यते रेफसञ्ज्ञि-
तोष्मपरेषु । यथा अपाम् रसेन । अपाꣳरसेन । त्वा-
म् । मन्वन्तः । त्वाꣳमन्वन्तः । देवम् सवितारम् । दे-
वꣳ सवितारम् । उरुम् हि । उरुꣳ हि । तथा-
च प्रतिज्ञासूत्रे । अनुस्वारस्य ꣳमित्यादेशः शषसह-
रेफेषु, तस्य त्रैविध्यमाख्यातं ह्रस्वदीर्घगुरुभेदैर्दीर्घा-
त्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः । अ-
नुस्वारस्य स्थानेꣳ इत्यादेशो भवति शषसहरेफेषु
परेष्विति शेषः । यथा त्रिꣳशत् । हवीꣳषि । प-
याꣳसि । दृꣳह्स्व । सꣳराय: । ह्रस्वादक्षरात्परो
दीर्घः । गुरौ परे नाम संयुक्ताक्षरे परे गुरुर्भवति ।
क्रमेणोदाहरणानि । दीर्घात्पराद्ध्रस्वो यथा । पृथि-
व्याꣳशतेन । यजूꣳषि । सस्वाꣳसम् । अङ्गाꣳह-

विधा । दृषाꣳ रयीणाम् । ह्रस्वात्परो दीर्घो यथा पि-
ठꣳ मह्नाम । सर्वꣳ॰ षड्डिति । भूयासꣳ॰ सुगृहप-
तिः । सꣳ॰ रायस्पोषेण । गुरौ परे गुरुर्यथा । भेष-
जꣳ श्रिया । दꣳष्ट्राभ्याम् । सोमानꣳ स्वरणम् । पि-
ꣳस्पृसि । ऋकारसंयोगे परे दीर्घ एव भवति न तु
गुरुः । उक्तं च कात्यायनशिक्षायाम् । अनुस्वारस्तुꣳ॰
कार आदेशश्छन्दसि स्मृतः । ऊष्मरेफेषु परतस्तस्य
द्वैविध्यमुच्यते । १ । ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वो गुरौ
च परतो गुरुः । ऋकारपर ऊष्मान्तो दीर्घाद्दी-
र्घोऽपि जायते । २ । तथा चामोघनन्दिनीशिक्षायाम् ।
अनुस्वारो द्विमात्रः स्यादूर्ध्वव्यञ्जनोदये । ह्रस्वाद्वा
यदि वा दीर्घाद्देवानाꣳ॰ हृदये यथा ॥ ३ । सꣳ॰सृष्ट-
जित्सꣳ॰सृष्टां संयोगे ह्रस्व ... उपधा च दीर्घमापद्यते-
षयः । अथानुस्वारेऽङ्गुलिप्रदर्शनविचारः लाक्ष... ।
... कृतसर्वसङ्ग्रहहस्तस्वरप्रक्रियाग्रन्थे ? स्वरधौ ।
... ... न्याज्या क्षिप्रं स्याद्द्विलके लघौ । ४धिसञ्ज्ञके
... ... प्रकरणस्यत्वाद्दीर्घे अनुस्वारे र्विलम् ।
... या निष्कास्या । द्विलके गु... चक्षरभकार-
... ... ुस्वारे क्षिप्रं स्यात् । क्षिप्रं नाद्धौरिव । "प-
कारिकायामेवोक्तम् । तर्जन्याः पृष्ठसंस्थि । "अनरत्नी" दू-
यनामितम् । तं क्षिप्रं हि विजानीयाज्जत्परत्वा" त्मानस्य

रितम् ।५। अयं भावः। लघौ अनुस्वारे गुरौ अनुस्व
च तर्जन्याः पृष्ठमङ्गुष्ठाग्रेण नामितं कार्यम् । इदम
नुस्वारेङ्गुलिक्षेपइति सामान्येनोक्त्वा, अङ्गुष्ठाकुञ्च
लघावनुस्वारे त्वपाठ रसम् । दीर्घे रङ्गे च तर्जन
प्रसारः परिकीर्तितः । ६ । इत्यनया दीर्घेऽनुस्वारे र
च तर्जन्याः प्रसारणं तदन्ये ह्रस्वे गुरौ चानुस्वारेऽ
ष्ठाकुञ्चनमिति, भगवता याज्ञवल्क्येन प्रतिपादिते
शास्त्रेणाप्यविरुद्धं भाति । तर्जन्याकुञ्चनं तु बाध्याभ
बाह्विशेषविहितत्वाच्च भवति । अत एव विद्वांसोऽ
दीर्घेऽनुस्वारे तर्जन्याः प्रसारणम् । लघौ गुरौ चा
स्वारे तर्जनीपृष्ठेऽङ्गुष्ठं नामयति ॥ स्पर्शे परपञ्चमश्च
३ । मकारः स्पर्शे परस्य पञ्चममापद्यते । ह्रिङ्कारायं
[illegible] । अनु[illegible]त्याद्यादाहरणं बोध्यम्
रेफेषु, [illegible]र्पङ्क्त्या । ८ । परस्य वर्णस्य किञ्चित्तत्सद्दृशं
त्परो [illegible]ीयम् ॥ अन्तस्थामन्तस्थास्वनुनासिकां परस-अ
नुस्व[illegible] ।५ ।अन्तस्थामन्तस्थासु परासु परेण समान-
परे [illegible]नुनासिकामन्तस्थामापद्यते । तँय्यज्ञम् । सँ-
यार्शसि [illegible]ल्लोकम् ॥ तकारो ले लम् । ६ । तकारो ल-
दीर्घः । [illegible]रमापद्यते । आसील्लोकम् । परिच्छिल्लोक-
क्रमेणोदा[illegible]ासिकम् । ७ । नकारो लकारे परे अनुना-
व्याप्त मतेन[illegible]पद्यते । अस्मिँल्लोके । भीँल्लोकान् ।

स्वराच्छकारे चकारेण सर्वत्र । ८ । स्वरः छकारे परे चकारेणागमिनोजस विधीयते पदादिमध्यान्तेषु । अच्छावदामसि । माच्छन्दः । जगतीच्छन्दः ॥ यच्छाति- च्छायसच्छेति न । ९ । एतेषान्न । सच्छन्दसः । अतिच्छा- यच्छिद्रा, यस्य छाया । ङ्णौ कटाभ्याꣳ सकारे । १० । ङका- रणकारौ यथासङ्ख्यं ककारटकाराभ्यां व्यवधीयेते स- कारे परे ॥ प्राङ्क्सोमः । समुद्राण्टसमस्पत् । उद- स्तभाने लोपम् । ११ । उदः परः स्तभानशब्दीयसकारो लोपमापद्यते । उत्तभान । "तस्मादित्युत्तरस्यादे"रि- त्याभिगमूत्रेऽस्यभिहितस्येत्युक्तत्वात् । उद्दिवꣳस्तभानेत्यत्र न सकारलोपो भवति । भाव्युपधस्सविसर्जनीयो, रे- फे लुप्यते दीर्घश्चोपधा । १२ । भाविसञ्ज्ञोपधो रिफि- तस्य विसर्गो रेफे परे लुप्यते उपधा च दीर्घमापद्यते । वसुभीरुद्रैः । जटायामुदाहरणम् । अन्ताकन्तः । नीरपाꣳसि । कद्रौद्रः । धातूरायः ॥ रेफꣳ स्वरघो । १३ । भाव्युपधो रिफितस्य विसर्गः स्वरे परे घिसञ्ज्ञके च परे रेफमापद्यते । घर्भिन्नरक्रमीत् । वायुरनिलम् । अग्निर्मूर्द्धा । त्वष्टुरीमातः । अहर्जिन्व । "अहरभकार- पर"मित्युक्तत्वात् । शुद्धान् प्रमहोभ्यः । स्वर्दैविव । "प- दादिष्वाजित्पर" इत्युक्तत्वात् । स्वर्ण्याय । "अनर्ष" इ- त्युक्तत्वात्स्वाय चारणाय च । "अजित्परत्वा"त्वामस्य

निषेधः ॥ कण्ठ्यपूर्वो यकारमरिफितः । १४ । रिफित-भिन्नः कण्ठ्यपूर्वो विसर्गो यकारमापद्यते स्वरे परे । य॒ऽइमा विश्वा । शुष्माऽओषधीनाम् । यवयोरिति लोपः ॥ लोपन्धौ । १५ । अरिफितः कण्ठ्यपूर्वो विसर्गो लोपमापद्यते धौ परे । देवा देवैः । अयक्ष्मा मा ॥ भूमेश्चाकारेऽष्टके । १६ । भूमिशब्दसम्बन्धो विसर्गो लोपमापद्यते अष्टकाकारे परे । भूम्याददे ॥ सर्वो अकार ओकारम् । १७ । ह्रस्वाकारपूर्वो अरिफितो विसर्गः सोपध ओकारमापद्यते धौ परे । "लोपं धा"वित्यस्यापवादः । देवो देवैः, देवो वः सविता ॥ अकारे च । १८ । अरिफितो ह्रस्वकण्ठ्यपूर्वो विसर्गः सपूर्व ओकारमापद्यते अकारे परे । स्तुपोऽसि । कृष्णोऽसि ॥ स्वोरक्ष्णरक्षू रात्र्याम् । १९ । स्वरित्ययं कद्दे अक्षुरित्ययं रात्रिशब्दे परे सपूर्व ओकारमापद्यते । स्वोरक्षाणाः । अक्षोरात्रयोः ॥ चछयोः शम् । २० । विसर्गश्चछयोः शमापद्यते । इन्द्रश्च । प्रजापतिश्छन्दः ॥ तथयोः सम् । २१ । विसर्गस्तथयोः समापद्यते । कस्त्वा । नमस्ते ॥ षविकार्ष्ठ० शाकल्यः शषसेषु । २२ । एषु विसर्गो विकारन्नापद्यते शाकल्यमतेन । व्यायव्याः स्थाताः ॥ अग्नीषोमयोः षष्ठी । श्वानस्पत्यः ॥ प्रकृत्या कखयोः पफयोश्च । २३ । कखयोः पफयोश्च परयोर्विसर्गः प्रकृत्या भवति । सिमाः

छायवन्ति, ततः खनेम । वसो : पवित्रम् । युः फ-लिनीः ॥ तस्मिँल्लृदृजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् । २४ । इति पाणिनीयसूत्रैः प्राप्ताः प्रतिषेधा बोध्याः ॥ लुङ्मुदि ञित्परे । २५ । ञित्सञ्ज्ञके परे मुत्सञ्ज्ञके च परभूते विसर्गो लुप्यते । अन्तास्तुताः । ऊर्ज्जस्त्य ॥ उपवसने पीवः । २६ । अयं विसर्गो लुप्यते उपवसने परे । पीवोपवसनानाम् ॥ स-ओषधीमयोः । २७ । स इति विसर्गो लुप्यते ओषधी-शब्दे इमशब्दे च परे । सौषधीरनु । सेमान्नः ॥ व्यञ्ज-ने च । २८ । स इत्ययं विसर्गो लुप्यते व्यञ्जने परे । स ते लोकः स पर्य्यगात् । स बोधि ॥ स्य एष च । २९ । स्यः एषः इमौ विसर्गौ लुप्येते व्यञ्जने परे । स्यराध्यः । एषते । एषच्छागः ॥ स्य व्याजी । एषस्य । इदं सूत्रद्वयं "तथयोः स"मित्यादीनां बाधकम् । स्य व्याजी स बोधी-त्यादौ "सर्वो अः कार ओकार"मित्यनेन पूर्वान्विधीन्बा-धन्ते नोत्तरानिति न्यायेन "विप्रतिषेधऽउत्तरस्वरलव-दलोपे" । ३० । इत्युक्तत्वादेतस्य बाधो मध्येऽपवादः प्रा-प्तः अलोप इत्युक्तत्वान्न भवति ॥ अनितावध्याये । ३१ । अधिकारोऽयम् । विधीयमानमागमविकारादिकार्यमितौ परे न भवति । उपस्थितं विना इति परत्वासम्भवात् । स्थितोपस्थितस्य तु एकविषयत्वादन्तःपदविकारागसवि-

षयोऽयं निषेधः । अध्याये इत्यधिकारोऽवध्यर्थम् । अधि-
कारः किम् । तवस्त्वामिति तवः । त्वम् । इत्यादौ "तय-
योः स"मित्यादि भवति । अध्याये किम् । गोव्यच्छमिति
गो । व्यच्छम् । इत्यादौ "स्वरे भावी"त्यादि भवति ।
अयं निषेधो विकारवतः पदस्यैव स्थितोपस्थिते ना-
न्यत्र तेन रायस्पोषदऽइति रायस्पोष । दे । अत्र रा-
यः स्म इति सकारो भवति ॥ इति वक्ष्यायाम् ।
३२ । पुनरुच्चारितं चर्चा । इतेः परं पदं तत्र इतौ पदे
यथा न भवति तद्वदेव ॥ ककारपकारयोः सकारम् ।
३३ । भाव्युपधः षकारम् । ३४ । भाव्युपधो विसर्गः ष-
कारमापद्यते । परिशेषात्कण्ठ्यपूर्वः सकारः ककारे च
परे । अधिकारोऽयम् । उत्तरसूत्रेषु यथायोग्यमुभयोः
सम्बन्धः ॥ आविर्निरिड इडाया वसतिर्वरिवः । ३५ ।
एतेषां विसर्गः ककारपकारयोर्यथार्थं सकारं
षकारं चापद्यते । आविष्कृणुष्व । अग्निष्पर । इड-
स्पदे । इडायास्पदम् । वसतिष्कृता । वरिवस्कृणोतु ॥
दिवोऽककुत्पृथिव्योः । ३६ ।॥ दिव इत्ययं विसर्गः कप-
योः समापद्यते ककुत्पृथिवीशब्दौ वर्जयित्वा । दिवस्प-
रि । दिवस्पुत्राय । दिवस्पृष्ठे । अककुदित्यादि कि-
म् । दिवः ककुत् । दिवः पृथिव्याः ॥ रायः सहस-
स्पोषपुत्रयोः । ३७ । एतौ यथासङ्ख्यं पोषपुत्रयोः प-

रयोः सकारमापद्येते । रायस्पोषे । सहस्रस्पुत्रः ॥ तम-
सोऽपरस्मात् । ३८ ॥ कपयोरयं विसर्गः समापद्यते पर-
स्माच्छब्दं वर्जयित्वा । तमसस्परि । अपरस्मात्किम् ।
तमसः परस्तात् ॥ तमसस्पृथिव्याम् । ३९ । अयं समा-
पद्यते पृथिवीशब्दे । तपसस्पृथिव्याम् ॥ अह्नो रजसो
रिषस्पृशस्पातौ । ४० । एते चत्वारः पाधातौ सकार-
मापद्यन्ते । अह्नस्पातु । रजसस्पाति । रिषस्पाहि
सुपस्पृशस्पाहि ॥ अह्नस्कुर्विति च । ४१ । एतन्निपा-
त्यते । सकर्मा २ऽ ॥ अह्नस्कुरु ॥ समानपदे च । ४२ ।
एकपदे विद्यमानो विसर्गः कपयोर्यथायथं सकारं ष-
कारं चापद्यते इतौ परे चर्चायां च न ॥ श्रेयस्कर ।
तपस्पतिः । हविष्कृत् । चतुष्पात् । स्थितोपस्थिते ।
श्रेयः करेति श्रेयः कर । तपः पतिरिति तपः । पतिः ।
शाःपत्यमिति शाः । पत्यम् । हविष्कृदिति हविः कृ-
त् । चतुःपादिति चतुः । पात् । इत्यादि भवति ॥ प-
राववसाने । ४३ । अवसानस्थिते परिशब्दे परे विसर्गः
समापद्यते । ओषधयस्परि । अवसाने किम् । हेडः प-
रि ते दृणक्तु ॥ कविः करत्कृधिषु । ४४ । एतेषु विसर्गः
कविशब्दे सकारं षकारं चापद्यते । वसुष्कविः । श्रेयस-
स्करत् । पुनस्कृधि ॥ कृपोश्च कृधौ सकारम् । ४५ । कृ-
पोरित्ययं विसर्गः कृधिशब्दे सकारमापद्यते । भाव्युप-

भत्वात्पूर्वसूत्रेण षकारे प्राप्ते विधिः । कृधीष्कृधि ॥ सदो द्यौर्नमस्कृतं पितापथेषु । ४६ । सदइत्यादीनां चयाणां विसर्गः कृतमित्यादिषु यथायथं सं षं चापद्यते । येषामस्तु सदस्कृतम् । उपहूतो द्यौष्पिता । ग्रन्थे सप्रथा नमस्पथे ॥ पतिताल्व्यस्वरोदये, पदे च । ४७ । तालव्यस्वरान्ते पतिशब्दे पदरूपे परे विसर्गः सकारमापद्यते । ताल्व्यस्वरोदयइति सम्भवाभिप्रायम् । ब्रह्मणस्पते । वाचस्पतये । वाचस्पतिम् । पदे किम् । "तस्मिन्निति निर्द्दिष्ट" इतिसप्तमीनिर्द्दिष्टवर्णविषयम् । अत्र चेदमेव ज्ञापकं पदावयवे व्यवस्थितस्यासम्भवात् । यतो जातः प्रजापतिः ॥ न परुषः परुषि । ४८ । परुषइत्ययं विसर्गः परुषि न सकारमापद्यते । "समानपदे चे"ति प्राप्तस्य निषेधः । प्ररोहन्ती परुषः परुषः ॥ वाजपतिर्वासएदिधिषुरन्तःपर्श्वव्येनान्तःपार्श्व्यमिति च । ४९ । कपयोर्व्वाजपतिरित्यादीनां चयाणां विसर्गो अन्तःपर्श्वव्येनेत्यादिपदद्वयसम्बन्धी च न विकारमापद्यते । वाजपतिः कविः, "कविः कर"दित्यस्य निषेधः । वासःपल्पूलीम् । एदिधिषुः पतिम् । अन्तःपर्श्वव्येन । अन्तः पार्श्व्यम् । "समानपदे चे"ति प्राप्तस्य निषेधः । इति चेति अनुक्तसमुच्चयार्थं तेन जातः पतिरित्यत्र न सकारः ॥ अहः पतौ रेफम् ।

५० । अहरित्ययं विसर्गः पतिशब्दे परे रेफमापद्यते । समानपदइत्यस्यापवादः । अहर्पतये । स्थितोपस्थिते तु अहः पतयऽइत्यहः । पतये ॥ परस्य मूर्द्धन्यम् ॥ ५१ ॥ अधिकारोऽयम् । परस्येति तऽआद्यादनाङ्कारादित्यस्मात्प्राक् मूर्द्धन्यमिति तमभि व्याप्य ॥ स्वर्धूः साऽसह्योः ॥ ५२ ॥ स्वः धूः इमौ यथा संख्यं साम् सह इत्येतयोः रेफमापद्यते, परस्य मूर्द्धन्यम् । स्वर्षामषाम् । इतं धूर्षाहौ ॥ "विकारी यथासन्न"मिति ईषद्दिष्टत्वात्षकारः । स्थितोपस्थिते स्वः सामिति स्वः । साम् । धूः सहाविति धूः । सहौ ॥ उकारन्दुहूर्दे ॥ ५३ ॥ दुरित्ययं विसर्जनीयः उकारमापद्यते परस्य मूर्द्धन्यम् । अिसङ्गत्वादसोष्मत्वान्निरनुनासिकत्वाच्च उकारः । परिते दूडभः । स्थितोपस्थिते दुहूर्दभऽइतिदुः । दभः । अध्यायइत्युक्तत्वादुपस्थिते "रेफऽस्वरघा"विति भवति, स्थिते तु न संहिताया अभावात् ॥ ओकारमितः सिक्षतौ सोपधः ॥ ५४ ॥ इत इत्ययं विसर्गः पूर्ववर्णसहित ओकारमापद्यते सिक्षतौ परे परस्य मूर्द्धन्यम् । परीतो षिञ्चता सुतम् ॥ इति विसर्गसन्धिकार्यम् ॥

## अथ विसर्गाङ्गुलिप्रदर्शनप्रकारमाः

ह भगवान्महर्षियाज्ञवल्क्यः ॥

ह्कारो नैव सन्त्व्यइति शाकल्यव्यवस्थितिः। इति वचनात्तत्स्वराग्रे तादृशस्वरानुकूलो विसर्गउच्चारणीयो न ह्कारसदृशइत्युच्चारणकर्तृशासनाद्यवस्था बोध्या॥ तत्राघादनाडम्बरात्॥ ५५॥ आघाशब्दात्परस्तकारो मूर्द्धन्यमापद्यते। स चेदाघाशब्दआडम्बरशब्दात्परो न। दावीघाटः। जित्सञ्ज्ञकत्वादसोष्मत्वाच्च टः। स्थितोपस्थिते तु दाव्वीघातऽइतिदाव। आघातः। अनाडम्बरादिति किम्। शब्दायाडम्बराघातम्॥ वनसदोऽवेटो रेफेण॥ ५६॥ वनशब्दः सदशब्दे परे रेफेण व्यवधीयते वनशब्दो वेटशब्दात्परोन चेत्। भुरण्यवो व्वनर्षदो व्वायवः। स्थितोपस्थिते व्वनसदऽइति वन। सदः। अवेटः किम्। आप्सु षदे वेड्नसदे॥ पत्यौ च सकारेण॥ ५७॥ वनशब्दः पतिशब्दे सकारेण व्यवधीयते। व्वनस्पतिः शमिता देवः। इदं शाखान्तरविषयम्। अत्र लेखनं तु सकारेणोत्यनुवृत्तिप्रदर्शनार्थं॥ ऋतावरौ च पतिपरयोः॥ ५८॥ ऋत अवर एतौ पति परयोः सकारेण व्यवधीयेते। तव व्वायवृतस्पते। तूणवद्भमवरस्पराय। स्थितोपस्थिते तु ऋतपतऽइत्यृत। पते। अवरपरायेत्यवर।

पराय ॥ तद्बृहतो करपत्योस्तलोपश्च ॥ ५९ ॥ तत् बृहत् एतौ करपतिशब्दयोः प्रत्यययोर्यथासङ्ख्यं सकारेण व्यवधीयेते । पूर्वपदयोश्च तकारलोपो भवति । यथा तत् करान् । तस्क राँ॥२ ॥ उत । बृहत् पतिः ॥ बृहस्पतिः । परिष्कृते षकारेण ॥ ६० ॥ परीत्ययं कृते परे षकारेण व्यवधीयते । परिष्कृताः शुक्राः । स्थितोपस्थिते तु परिष्कृताऽइति परि । कृताः ॥ चन्द्रे सुशकारेण ॥ ६१ ॥ सुशब्दः चन्द्रे परे शकारेण व्यवधीयते । उभेसुश्चन्द्र । स्थितोपस्थिते सुचन्द्रेति सु चन्द्र ॥ दुषुवान्थो दकारम् ॥ ६२ ॥ दुषुवान्नित्ययं षकारो दकारमापद्यते । बृहतोन्दुद्वन् । स्थितोपस्थिते दुषुवान्निति दुषुवान् ॥ भाविभ्यः सपरं० समानपदे ॥ ६३ ॥ भाविभ्यः परः सकार एकपदे विद्यमानः षकारमापद्यते ॥ षात्तथौ मूर्द्धन्यम् ॥ ६४ ॥ षकारात्परौ तथौ मूर्द्धन्यमापद्यते । व्रजम्भच्छ गोष्ठानम् । परमेष्ठ्यभिधीतः । आप्सवन्तरा सुषान । भुवना सीषधाम । दुष्टरस्तरन् । तकारस्य टकारः । जित्सऽजकारत्वात्सोष्मत्वाच्च थस्य ठः । स्थितोपस्थिते तु । गोस्थानमिति गो । स्थानम् । परमेस्थीति परमेस्थी । दुस्तरऽइति दुः । तरः । सुसानेति सु । साना । सीसधामेति सीसधाम । तस्मादित्युत्तरस्त्यव्यवस्थितस्य । तेन पुनः टत्वं तकारस्य मूर्द्धन्येन ॥ आ-

नुस्वाराच्च तत्पूर्वात् ॥ ६५ ॥ भाविपूर्वादनुस्वारात्परः सकारः षकारमापद्यते । तपूꣳष्यग्ने । पुरोडाशैर्हवीꣳष्या । तत्पूर्वात्किम् । वामनाꣳसि ॥ करेफाभ्यां च ॥ ६६ ॥ ककाररेफाभ्यां च परः सकारः षकारमापद्यते ऋक्षु । वनर्षदः । अनुस्वारात्ककाराच्च परस्य षत्वं व्याकरणसिद्धम् । अत्र लेखनं तु हिं० सीर्क्सामयोरित्यादिनिषेधस्य वक्ष्यमाणत्वात्प्राप्तिप्रदर्शनार्थम् ॥ नेः सीदतेः ॥ ६७ ॥ नेः परः सदधातोः सकारः षकारमापद्यते । एदं बर्हिर्निषीदत ॥ ससाद च ॥ ६८ ॥ नेः परः ससादेति सकारः षकारमापद्यते । एतस्य सदधातुजत्वात्स्पष्टार्थम् । निषसाद धृतव्रतः ॥ ओकारात्सु ॥ ६९ ॥ ओकारात्परः सुसकारः षकारमापद्यते । मोषू णः ॥ उपचाष्टकात् । ७० । अष्टकादुकारात्परः सुसकारः षकारमापद्यते । अदृꣳहऽऊषुणः ॥ अभेश्च । ७१ । अभेः परः सुसकारः षकारमापद्यते । अभीषुणः ॥ परेश्च सिञ्चतेः । ७२ । परेः परः सिञ्चतेः सकारः षकारमापद्यते । परिषिञ्चन्ति ॥ अभेश्च । ७३ । अभेः परः सिञ्चतेः सकारः षकारमापद्यते । सिञ्चात्रकणावभ्यषिञ्चन् ॥ वेर्युदयः । ७४ । वेः परीभूतो यकारपरः सकारः षकारमापद्यते । विष्यास्यायुषो न सद्यात् । युदयः किम् । विस्वः पश्य ॥ हे-

र्मिर्णोदयः। ७५। ह्रेः परीभूतो मकारपरस्यकारपरस्य सकारः षकारमापद्यते। अस्ति ह्रिष्मते । आपो ह्रिष्ठ ॥ द्यवेश्च । ७६ । द्यविशब्दात्परस्यकारोदयः सकारः षकारमापद्यते । मकारस्त्वसम्भवान्न सम्बध्यते । उपद्यविष्ठ ॥ नेस्त्यास्तनोः । ७७ । निशब्दात्परस्यास्तन्योर्धातोः सम्बन्धिसकारः षकारमापद्यते । निःस्त्यायताम् । निः स्तनिहि इति स्थिते "लुङ्मुदि जिम्रे" इत्यनेन विसर्गलोपे कृते सस्य षः । आप्यायतान्निष्ट्यायताम् । निष्टनिहि ॥ ततक्षौ । ७८ । नि इत्यस्मात्परः सकारः षकारमापद्यते ततक्षौ परे। तथयोरिति सस्य षः । स्वधया निष्टतक्षुः ॥ अनोः स्तुवन्त्याम् । ७९ । अनोः परः स्तुवन्ति सकारः षकारमापद्यते । अनुष्टुवन्ति पूर्व्वथा ॥ दुःष्वप्न्यम् । ८० । इदं कृतषत्वं निपात्यते । दुःष्वप्न्यहं० सुव । स्थितोपस्थिते दुःस्वप्न्यमिति दुःस्वप्न्यम् ॥ वन्द्रास्कम्भोकिः । ८१ । एतयोः सकारः षकारमापद्यते । इह यानि विसर्गान्तानि पदानि तेषां तथयोरिति सत्वे कृते षः। गृणाति वन्द्राष्कष्टे । माकिष्टे व्यथिरादधर्षीत् ॥ सहेः पृतनायाः । ८२ । पृतनाशब्दात्परः सहेः सकारः षकारमापद्यते। पृतनाषाह्याय च। स्थि-

भाविपूर्वाद्यमासे विधिः ॥ सधिरठं॰ग्रुरदितिः । ८३ । एतेषां त्रयाणां सकारः षकारमापद्यते । अ॰ शस्वन्ने सधिष्ठव । अठं॰ग्रुरठं॰ग्रुष्टे । अदितिष्टे ॥ वायुरग्निरग्नेरेकाक्षरे । ८४ । एतेषां त्रयाणां सकारः एकाक्षरे पदे षकारमापद्यते । वायुष्ट्वा पचतैः । अग्निष्टेऽधिपतिः । अग्नेष्ट्वा तेजसा । एकाक्षरे किम् । अग्निस्तिग्मेन । अग्नेस्तनूः ॥ सकारपरे च । ८५ । भाव्युपधः सकारः सकारे परे एकाक्षरे पदे षकारमापद्यते । अनतष्ष्व नुष्वम् । सकारपरे किम् । सवितुस्त्वा प्रसवे ॥ मातृभिरर्चिर्भिः पायुभिर्वक्ष्णीः । ८६ । एतेषां चतुर्णां सकारः षकारमापद्यते । सठं॰ सृज्य मातृभिष्ट्वम् ॥ शिवेभिरर्चिर्भिष्ट्वम् । अदब्धेभिः सवितः पायुभिष्ट्वम् । वक्ष्णीष्वा ॥ प्रकृत्या नानापदस्थे तका । ८७ । अधिकारोऽयम् । अनु सन्तनोतु बृहस्पतिः सुतस्य सुसमिद्धाय सुसन्दृशमभि सत्वाऽभिसँस्विमन्तु सुसस्याऽअतिस्थूलम्मुसले पत्नी सँख्याताम् क्रतुस्थलाञ्जिसक्थ्यौ दिविस्पृशा हृदिस्पृशठं॰ सीनँक्सामाभ्यां तिस्त्रिरिस्त्रे सीसेन सीसाः सीसं पशुसनि गोसनि प्रतिसद्दङ् प्रतिसद्दङासश्च्युतुक्सिठं॰ यत् । ८८ । एते षड्विंशत्सकाराः प्रकृत्या भवन्ति । हि-

ठं॰सीरि "त्वचानुस्वाराच्चेति" प्राप्तिः। ऋक्सामेति द्वये "चारेफाभ्यां चेति"। तित्तिरिस्ते सर्पाणामित्यत्र 'सकारपरे चेति'। अन्यत्र समानपदत्वात्। चतुष्टिठं॰ शदिति किम्। घर्मश्चतुष्टोमः। अत्र 'लुङ्सुदीति' विसर्गलोपे 'भाविष्य' इति षत्वं भवति। वीर्यं पुनो-ऽनुसन्तुनोतु। बृहस्पतिसुतस्य। सुसमिद्धाय, सुसन्दृशन्त्वा। अभिसत्त्वा सहोजाः। देवाऽअभिसँ-स्त्रियन्तु। सुसस्याः कृषीस्कृधि। अतिस्थूलं चातिकृ-शम्। उलूखलमुसले। शँय्युना पत्नीसँय्याजान्। पु-त्रिकस्थला च क्रतुस्थला। शितिकक्षोऽत्रिसक्थयः। बृहता स्त्रिविसृष्टया। मद्द्रुठं॰ हृत्स्वृशम्। एनठं॰ हिठं॰सीः। ऋक्सामयोः शिल्पे। ऋक्सामाभ्याऽ-सन्तरन्तः। तित्तिरिस्ते सर्पाणाम्। सीसेन तन्त्रम्। हरिणोः सीसाः। सीसञ्च मे। प्रजासनिपशुसनि। गो सनि। प्रति सद्दृङ्। प्रतिसद्दृशासऽएतन। चतुष्टिठं॰ श-द्द्वाजिनः॥ ऋकारेफावृदयश्च। ८९। ऋकारो रेफाऽअ-वइत्येतत्त्रयपरः सकारः प्रकृत्या। तिसृभिरस्तुवत। तिस्रश्च मे। व्वाचो व्विसर्जनम्॥ पृथिवि दिव्युपरि-चर्षणिशकुनियासिभ्यः। ९०। एतेभ्यः षड्भ्यः सकारः प्रकृत्या। पृथिवि सदन्त्वा। दिवि सदन्त्वा। उपरि स-दो दुवस्वन्तः। चर्षणी सहाँ व्विशु। शकुनि सादेन कृ-

ष्मीन् । अवयासिसीष्ठाः । इतिषत्वप्रकरणम् । ऋषरे-
भ्यो नकारो णकारं० समानपदे, स्वरयवहकपैश्च ।
८१ । ऋकारषकाररेफेभ्यः परः स्वरयकारवकारह-
कारकवर्गपवर्गव्यवहितोऽपि नकारो णकारमापद्यते
समानपदे । तस्मादित्युत्तरस्येत्युत्तरस्येत्युक्तत्वाद्व्यवधाने
अप्राप्तवचनादेतैर्ग्रस्तैर्यथासम्भवमिलितैश्च व्यवाये भव-
ति नान्यैः । नृमणाः । पुरीषवाहणः । स्थितोपस्थिते
तु नृमनाऽइति नृ। मनाः। पुरीषवाहनऽइति पुरीष।
वाहनः । प्रवाहनऽइति प्र। वाहनः।एतैः किम्। र-
श्मिना । रथेन । कचानः । रघेन ॥ प्रनेति नुदाति
हिनोमीनाम् । ८२ । प्रेत्यस्मान्नोनुदधात्वोर्हिनो-
मिशब्दस्य च नकारो णकारमापद्यते । प्रणाय देवा-
ऽव्यम् । प्रणुदानः । प्रहिणोमि ॥ प्रकृत्या पदा-
न्तीयः । ८३ । पदान्तीयो नकारः प्रकृत्या भव-
ति । पूषन् । अस्मान् । पितॄन् ॥ निवनिन-
सः प्रपीनम् । ८४ । ऋषरेभ्यो निवनिनसइत्येषां
प्रपीनमित्ययं नकारः प्रकृत्या । भूम्ना बभ्रुनीका-
शाः । ब्रह्मवनि त्वा क्षत्रवनि । वार्ध्रीनसस्ते । प्रपी-
नमग्ने ॥ श्रीमनाऽइत्येके । ८५ । एकशब्दो मुख्य-
वाची । अयं च निपात्यते । श्रीमनाः शतपयाः ॥ इ-
न्द्राग्नी चित्रभानो वार्त्रघ्नन्दुः ष्वान्तं ध्रुवयोनिः पुरोऽ-

नुवाक्याभिः पुरोऽनुवाक्याश्वर्म्मिन्नम् । ९७ । एतान्यष्टौ निपात्यन्ते । इन्द्राग्न्योरुज्जितिम् । इन्द्रायाहि चित्रभानो सुताः । इन्द्रस्य वार्त्रघ्नमसि । दुःष्वप्न्यं० सुव । ध्रुवक्षितिर्ध्रुवयोनिः । स्तुचः पुरोऽनुवाक्याभिः । पुरोऽनुवाक्याभिः । पुरोऽनुवाक्यायाज्याभिः । साक्षोऽप्यश्वर्मकिन्नम् ॥ तवर्गे च । ९८ । ऋपरेभ्यः परो नकारः प्रकृत्या पवर्गे परे । त्वष्टमन्तु होत्राः । अवक्रान्तेन तालु । क्रन्दते ॥ पादन्तरक्षकारे । ९९ । पात्परो नकारः प्रकृत्या क्षकारे परे । उग्रस्त्वेष नृम्णः ॥ निषण्णाय रथवाहनमिन्द्रऽएणं परिणीयते समिन्द्रणऽउरुष्याणो रक्षा णः पुणः पूणःपुणा स त्या स्वर्णास्यूरिणौ प्रणऽआयूंषि । १०० । एतानि नयोदश निपात्यन्ते । निषण्णाय । रथवाहणम् । इन्द्रऽएणम् । परिणीयते कविः । समिन्द्र णो मनसा । उरुष्याणोऽअघायतः । रक्षाणो ब्रह्मणस्पते । मोषूणऽइन्द्र । अभीषुणः । गोमदूषुणा सत्या । स्वर्णं घर्मः । अस्थूरिणौ । निषण्णायेतिनि । षण्णाय । रथवाहनमितिरथ । वाहनम् । इति णत्वप्रकरणम् ॥ दीर्घम् । १०१ । अधिकारोऽयम् ॥ अश्वरश्मिस्स मति सुमति चारय इषिसेदिमेन्द्रिय धारय च्छिनभङ्गुरवयुनाश्वस्य हृदयवृण्वत्तीश्यवताध्यर्चभक्ति पुरुषचि-

वकारे । १०२ । एते पञ्चविंशतिश्शब्दा दीर्घमापद्यन्ते वकारे परे । अश्वावतीम् । रश्मीवतीम् । मतीविदे । सुमतीवृधः । स्वाविन्नोमी । सुतावतः । चारयावृषन् । सेदिमावयम् । इन्द्रियावान् । धारयाव्रतानि । चित्रावसो । अङ्गुरावताम् । व्ययुनाविदेकः । अश्वस्याविशस्ता । ऋतावानम् । अभीवर्त्तः । प्रावतावच्चः । अधीवासम् । शक्ती विश्वानराय । शक्तीवन्तो गभीराः । इमाऽउत्वा पुरूवसो । स्थितोपस्थिते तु अश्ववतीमित्यश्व । वतीम् । रश्मिवतीमिति रश्मिवतीम् । मतिविदऽइतिमति । विदे । सुमतिवृधऽइतिसुमति । वृधः । स्वविदितिस्व । वित् । सुतवतऽइति सुत । वतः । इषिणावानिति इषिणा वान् । इन्द्रियवानितीन्द्रिय । वान् । चित्रवसोऽइति चित्र । वसो । अङ्गुरवतामिति । अङ्गुर । वताम् । व्ययुनविदिति वयुन । वित् । हृदयविधऽइति हृदय । विधः । ऋतवानमित्यृत । वानम् । अभिवर्त्तऽइत्यभि । वर्त्तः । अधिवासमित्यधि । वासम् । शक्तिवन्तऽइति शक्ति । वन्तः । पुरुवसोऽइति पुरु । वसो । शचीवसो । अन्यशाखीयमिदमुदाहरणम् ॥ नाश्ववद्धिरण्यात् । १०३ । हिरण्यवच्छब्दात्परश्वइति शब्दरूपं वदित्येतस्मिन्परे न दीर्घमापद्यते । हिरण्यवदश्ववत् ॥ अभिनिकथयेषु वो-

रविश्वव्रसहमवाजयन्तेषु। १०४। अभीत्ययं ह्रस्वो वि-
कवर्गेऽभित्यादिषट्सु न दीर्घमापद्यते। अभि विवव्रे-
षम् । अभि वीरोऽअभिसत्वा। अभि विश्वे गृणा-
न्तः। अभि वत्सन् । अभिहनम् । अभिवाजयन्तः ॥
अश्वस्य वाजिन इति च। १०५। अश्वस्येति ह्रस्वो
वाजिन इत्येतस्मिन्परे न दीर्घमापद्यते । अश्वस्य
व्वाजिनः। इति चेत्येवं विधान्योदाहरणसूचनार्थ-
म्। तेनाभिवक्तेति न दीर्घः ॥ विश्वसहभुवपुषवसु-
षु। १०६। नेति नानुवर्त्तते। विश्वेत्ययं ह्रस्वः सहा-
दिषु चतुर्षु दीर्घमापद्यते । विश्वासाहमवसे ।
व्विश्वानराय व्विश्वाभुवे। उत व्विश्वापुषम् । ग-
न्धर्व्वस्त्वा व्विश्वावसुः । स्थितोपस्थिते तु । व्विश्व-
सहमिति विश्व । सहम्। व्विश्वभुवऽइति विश्व।
भुवे। व्विश्वपुषमिति विश्व। पुषम्। व्विश्ववसुरि-
ति विश्व। वसुः॥ तिष्ठाद्युदात्तम् ॥ १०७॥ आद्यु-
दात्तं तिष्ठेतिपदं दीर्घमापद्यते। तिष्ठा रथमधिय-
म्। तिष्ठा देवो न सविता। आद्युदात्तं किम्। आ-
तिष्ठ वृत्रहन् ॥ प्रवणाङ्गयासेषु ॥ १०८ ॥ प्रेत्ययं
ह्रस्वो वनादिषु त्रिषु दीर्घमापद्यते। प्रावणेभिः स-
जोषसः। प्राङ्गा साह्नेन्द्राः। प्रायासाय। स्थितो-
पस्थिते प्रवणेभिरिति प्र। वणेभिः। प्रङ्गादिति प्र।

ष्टङ्गाः । प्रयासायेति प्र । यासाय ॥ धारयास योजा-
व सचस्व नुद सोषु जयतीकण्व रक्ष युज युक्ष म-
त्स्व पिबत गायता तु येन नकारे ॥ १०९ ॥ धारया-
सेत्यादयः षोडशाक्षरा नकारे दीर्घमापद्यन्ते । धार-
यासा नमोभिः । योजान्विन्द्र । अवानो देव्या धि-
या । सचस्वानः स्वस्तये । प्रणुदानः । सोषूणः । सो-
षु किम् । ऊर्ध्वऽऊषुणः । जयता नरः । उरुण्याणः ।
रक्षाणः । युजानो मित्रावरुणा । युक्षानः मर्म्य ।
मत्सथा नो विश्वम् । पिबतानिरवह्वयात् । गायता
नरः । आतू नः । आतुकिम् । तु चेतुनो भवन्तु । ये-
ना नः पूर्वे ॥ अत्र च ॥ ११० ॥ अयं ह्रस्वो दीर्घमाप-
द्यते नकारे परे । अत्रानः ॥ सवावरुत्यव्यवाजस्य
पायुषु च ॥ १११ ॥ अवेत्ययं ह्रस्वस्सवादिषु चतुर्षु
दीर्घमापद्यते । अवासवा । अवा व्याजस्य । अवा पा-
युः ॥ नावनयामि ॥ ११२ ॥ अवेत्ययं ह्रस्वो नयामि-
शब्दे परे न दीर्घमापद्यते । अवनयामि ॥ अष्टक्त्वः
सौ ॥ ११३ ॥ उकारः सौ परे दीर्घमापद्यते । मक्षीमू
षु ॥ रथितकारनकारयोः ॥ ११४ ॥ रथीत्ययं ह्रस्वस्त-
कारनकारयोर्दीर्घमापद्यते । रथीतमम् । रथीनांस्वा-
जानाम् । स्थितोपस्थिते रथितममिति रथि । तम-
म् । रथिनामितिरथि । नाम् ॥ अथोदारियशोच

पनय सादयर्ज्जु इषशत्रु सख्याघाघारात्यृतभवता यकारे ॥ ११५ ॥ अथादयश्चतुर्दश लब्धा यकारे दीर्घमापद्यन्ते । अश्वम४ अश्वाय । उशादिया यज्ञ । बृहच्छोचा यविष्ठ्य । पनया युजम् । सादया यज्ञम् । ऋजूयताम् । इषायमाणः । शत्रूयतो हन्ता । सख्या यत् । आघाये । अघायतः । अरातीयतः । ऋतायते । स्थितोपस्थिते तु अथयेति अथय । ऋजुयतामित्यृजु । यताम् । इषयमाणऽइति इष । यमाणः । शत्रुयतऽइति शत्रु । यतः । अघयतऽइत्यघ । यतः । अरातियतऽइत्यराति । यतः । ऋतयतऽइत्यृत । यते ॥ वहथवहजोः ॥ ११६ ॥ व इत्ययं वहथवहजोर्दीर्घमापद्यते । वाहथे । प्रवाहजे । स्थितोपस्थिते वहथऽइति वहथे । वहजऽइति वहजे ॥ अद्य तं॰ हकारश्चकारभवत इषीमहे देवेषु ॥ ११७ ॥ अद्येत्ययं तमित्यादिषट्सु दीर्घमापद्यते । अद्यातमस्य । तमिति किम् । अद्य तेऽअपरम् । अद्याह्वेम । हवमद्या च । अद्या भवत । अद्या इषीमहे । अद्या देवाः ॥ न होतरि ॥ ११८ ॥ अद्येत्ययं न होतरि दीर्घमापद्यते । अद्य होतारम् ॥ शृणुत त्विषि भजि भवत पिबत स्म तिष्ठ रक्षामकारे ॥ ११९ ॥ शृणुतादिर्नव लब्धा मकारे परे दीर्घमापद्यन्ते । शृणुत

ऽङ्गम् । ग्रुष्मिन्नराय त्विषीमते । व्रातऽइवप्रजी-
मान् । इदं शाखान्तरविषयम् । माध्यन्दिनानान्तु
दीर्घत्वादेव मतुप् । अतएवाचान्तःपददीर्घीभाव
इति स्थितोपस्थितं न । भवताम्रडयन्तः । पिबामि-
त्रस्य । इता मरुतः । हिरण्मया मनवे । तिष्ठा मन्हा-
ऽसि । रथा साक्षिः । स्थितोपस्थिते । त्विषिमतऽइ-
ति त्विषि । मते ॥ विश्वदेव्यसोमौ वत्याम् ॥ १२० ॥
एतौ ह्रस्वौ वतीशब्दे दीर्घमापद्येते । विश्वदेव्याव-
ती । सोमावतीम् । स्थितोपस्थिते विश्वदेव्यवती-
ति विश्व। देव्यवती । सोमवतीमिति सोम। वतीम् ।
वत्यामितिकिम् । सोमवताम् ॥ उषसश्चोभिर्नक्तमीका-
रैकारौकारनकारेभ्यः ॥ १२१ ॥ मश्चोभिरित्यादि-
निभ्यईकारादिचतुर्भ्यश्च पर उष इत्ययं ह्रस्वो दी-
र्घमापद्यते । प्रकरणानुसारादन्त्यस्य व्याख्यानात् ।
मश्चोभिः उषासा नक्ता । नक्तोषासा । आयतीमुषा-
सम् । देवीऽउषासौ । उषाकेऽउषासा नक्ता । यो-
नाऽउषासा नक्ता । नऽउषासः । अव्यवहितस्यास-
म्भवाद्व्यवधानेऽपि । स्थितोपस्थिते उषसानक्तेत्युष-
सा । नक्ता । नक्तोषसेति नक्तोषसा । उषसमित्युषसम् ।
उषसावित्युषसौ । उषसऽइत्युषसः । एतेभ्यः किम् । अ-
स्यऽउषसाम् ॥ पूरुषोऽवसाने ॥ १२२ ॥ पूरुष इत्ययं

आदिर्दीर्घो निपात्यते अवसाने चेत् । सनवथ पूरुषम् । अवसाने किम् । उदैत्पुरुषः ॥ पूष्णो जहीमस्तेष्वत्र ॥ १२३ ॥ अत्रेत्ययं ह्रस्वः पूष्ण इत्यादिषु त्रिषु दीर्घमापद्यते । अत्रा पूष्णः । अत्रा ते भद्राः ॥ नरः सप्त ऽऋषीन्न तऽआङ्गन्नियुद्भिष्षु यत्र ॥ १२४ ॥ यत्रेत्ययं ह्रस्वो नरइत्यादिषु पञ्चसु दीर्घमापद्यते । यत्रा नरः । यत्रा सप्तऽऋषीन् । यत्रा नक्षत्रा । यत्रात ऽआङ्गः । तऽआङ्गः किम् । यत्र ते ययुः । यत्रा नियुद्भिः ॥ अभिमातिपृतनासु सपत्नभूर्विश्वसमत्सुपृतना व्रातेभ्यः सहेः ॥ १२५ ॥ अभिमातीत्यादिभ्यः सह धातोर्ह्रस्वो दीर्घमापद्यते । अन्त्यस्यासम्भवादनन्त्यस्य । तत्र द्वयोः प्राप्तौ "सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टस्येत्यादेः । अभिमातिषाहः । पृतनासु सासह्यिम् । सपत्नसाही । इतं भूर्षाहौ । विश्वासाहमवसे । समत्सु सासहः । पृतनाषाह्याय च । व्रातसाहाः । स्थितोपस्थिते अभिमातिसहऽइत्यभिमाति । सहः । ससहिमिति ससह्यिम् । सपत्नसहीति सपत्न । सही । भूः सहाविति भूः । सहौ । विश्वसहमिति विश्व । सहम् । ससहऽइति ससहः । पृतनासह्यायेति पृतना । सह्याय । व्रातसहाऽइ-

उक्थशब्दात्परः शसेर्ह्रस्वो दीर्घमापद्यते । उक्थशासश्चरन्ति । स्थितोपस्थिते उक्थशास इत्युक्थशसः ॥ एवाच्छवच्छमाथ ॥ १२७ ॥ एतेषां चतुर्णां ह्रस्वा दीर्घमापद्यन्ते । संहिताऽधिकारादवसाने न । एवा नो दूर्वे । गिरिशाच्छावदामसि । षच्छमा व्ययम् । यथा नऽइन्द्रः । एवशब्दोऽत्रोपमार्थ एव व्याख्यानात् । अवधारणार्थस्य तु न । तदेव शुक्रम् । सऽएव जातः । अवसाने तु तानो ऽअच्छ ॥ विद्मा सौत्रामण्याम् ॥ १२८ ॥ विद्मेत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रान्वर्जयित्वा । विद्मा तेऽअग्ने । असौत्रामण्यां किम् । विद्म यँ २ ॥ ऽउ च न ॥ अधायत्स्वाग्नावायुषु ॥ १२९ ॥ अधेत्ययं ह्रस्वो दीर्घमापद्यते यत्स्वाग्नावायु एतान्वर्जयित्वा । अधासपत्नान् । अयाह्यग्ने । अयदित्यादि किम् । अधयत् । अधस्य ते व्रजनम् । अधाग्नाः । अधव्वायुम् ॥ पिबासोमं पिबासुतस्य स्थासयो भुवो नूरणे शसीष्व मामहानो मामहन्तामभीतम रीरिषो रीरिषत याभयन्ति हि घ्स्मा ते वर्द्धयारयिं सुधीत्ववस्वरा सोम स्वयवसिनी स्रोतायावाणो धर्षा मानुषः पाद्या दिवो युवा हि गमया तमः सिञ्चता सुतं परीवाषऽउक्था शस्त्राण्यत्ता इवोऽष्याच्या जानु चामार्ट-

श्याम पितरा त्वधो वोधा मे विसृता अन्धमवता इवेषु इरणुधी गिरो रक्षा तोकं चर्षणीसहां चर्षणीघृतो येना समत्सु वनेमातऽऋतुश्यामा ते शिवासखिऽअयस्तु ना रथं दीया रथेनेता जयत वर्द्धया त्वं प्रवत्रवामा घृतस्या- जगन्थ। परस्यारश्मिमाहि पुरीतता लोहाकर्णशुराठाक- र्णौ। प्रकृतिदीर्घौवित्येके नौकाशा अनूकाशेन चक्रा- जरस्मिग्रुकस्तरता सखायः सासह्वानपामार्गोभि- याद्दतऽऋतीहमभीषु सुष्टरीमा जुषाणो यजा देवान्त्ये- ना पावकास्वायन्तो यद्दी सरमा स्वदया सुजिह्व नि- पद्या दधिष्व सदतना रणिष्ट न भरा चिकि[illegible]न्त्साद- या गविष्टावदाददद्दृहा चायुनक्तूजा रराणः सादन्य- मिति च॥ १३०॥ पिबासोमभित्याद्दीन्यष्टसप्ततिरूपा- णि कृतदीर्घाणि निपात्यन्ते। यत्र तु पदद्वयपाठस्त- त्र यथोक्ते दीर्घः। अन्यत्र तु एकपदस्थः। लोहाकर्ण- शुराठाकर्णौ प्रकृतिदीर्घौ। इति चकारोऽनुक्त- समुच्चयार्थः। तेन यच्छ देवायुवम्। यच्छेति किम्। यज्ञपतिं देवयुवम्। पुरीततेति विभक्तिरविवक्षिता। पुरीतत् इत्यपि भवति। स्थितोपस्थिते शमिष्वेति शमिष्व। ससहान इति ससह्वानः। ससहन्तामिति ससहन्ताम्। अशितमेत्यशितम। रिरिषऽइति रि-

रिषः । रिरिषतेति रिरिषत । सुयवसिनीऽइति सु । यवसिनी । परिवापऽइति परि । वापः । चर्षणि सहामिति चर्षणि । सहाम् । चर्षणिधृतऽइति चर्षणि । धृतः । पुरितेति पुरि । तता । पुरितद्दिति पुरि । तत् । लोहकर्णऽइति लोह । कर्णः । शुण्ठकर्णऽइति शुण्ठ । कर्णः । बभ्रुनिकाशाऽइति बभ्रु । निकाशाः । अनुकाशेनेत्यनु । काशेन, अश्वयन्तऽइत्यश्व । यन्तः । अयुनगित्ययु । नक् । सदन्यमिति सदन्यम् । देवयुवमिति देव । युवम् । आकारोपधो यकारमिति सूत्र एतदध्यायस्याप्येतदध्यायस्थत्वात् । स्थितेःस्थिते दृष्टिमानिवेति दृष्टिमान् । इव ॥ स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ॥ १३१ ॥ स्वरात्परः संयोगस्यादिवर्णः पदान्तमध्यादिषु द्विरुच्यते । अनुष्टुप्पे । इषे त्त्वा । आच्च्या जानु । स्वरादिति किम् । श्रुधि श्रुत्कर्ण ॥ परन्तु रेफहकाराभ्याम् ॥ १३२ ॥ तु एवार्थः । रेफहकाराभ्यां परं व्यञ्जनमेव द्विरुच्यते न रेफहकारौ । सूर्य्यः । पूर्व्वः । प्रबाह्वाय । बाह्वोः । रेफहकारयोः प्रत्यक्षश्रुतिनिमित्तत्वेन सामान्यप्राप्तकार्यत्वबाधः । तेन रहभिन्नस्यैवानेन द्वित्त्वम् । अति ह्रस्वम् । अर्हतः । अत्रैतयोर्न्न द्वित्वम् । स्वरे परे रेफात्परेषामूष्मणामनेन द्वित्त्वम् । तत्र रेफस्य ए-

कारसहितोच्चारणविधानाद्रेफधर्माभावात् । दर्शितम् । वर्षा, यत्र तुल्यरत्वं तत्र विधानाभावाद्द्वित्वं भवत्येव। वर्ष्मैः। व्यर्य्याय। अत एव पाणिनिना "शरोऽचीति" द्वित्वनिषेधः कृतः। परं रेफहकाराभ्यां व्यञ्जनं तूष्मवर्जितम्। द्वित्वमापद्यते रेफहकारौ तु न कुत्रचित् ॥ १ ॥ ऊष्मान्तस्थाभ्यश्च स्पर्शः ॥ १३३ ॥ च एवार्थो भिन्नक्रमः। ऊष्मभ्योऽन्तस्थाभ्यश्च परः स्पर्श एव द्विरुच्यते न ऊष्मान्तस्थाः। अश्मन्नूर्ज्जम्। पूष्णः। हस्ते। दधिक्राव्णः। शल्मलिः॥ विसर्ज्जनीयाद्यञ्जनपरः ॥१३४॥ विसर्ज्जनीयात्परः स्पर्शो द्विरुच्यते व्यञ्जनपरश्चेत्। विष्णोः क्रमः। हिरण्यपाणिः प्रति गृभ्णातु। व्यञ्जनपरः किम्। न्यङ्कुः। गौरस्त्वगः पिट्टः॥ ङनौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ ॥ १३५ ॥ पदान्तस्थौ ङकारनकारौ स्वरे परे ह्रस्वपूर्वौ द्विरुच्येते॥ युङ्ङसि। अघ्नन्नमीमदन्त। ह्रस्वपूर्वौ किम्। सुप्राङ्जः। कुटरूनालभते॥ नास्वरपूर्वा ऊष्मान्तस्थाः॥ १३६ ॥ अस्वरेति पर्य्युदासः। तेन स्वसदृशस्य वर्णस्य ग्रहणम्। ये ऊष्माणोन्तस्थाश्च व्यञ्जनपूर्वास्ते द्विर्वचनस्य निमित्तं न भवन्ति। वर्ष्मन्। पार्ष्ण्यौ वा। व्यञ्जनेति किम्। अप्स्वे ॥ यैस्तु परं तैर्न्न पूर्व्वम् ॥१३७॥ यैर्हेतुभूतैः परस्य द्विर्भावः क्वचिदुक्तस्तैः सह संयुक्तं

पूर्वं तद्व्यञ्जनं न द्विरुच्यते । कृत्स्नहृदयेन । सकारस्य ऊष्मत्वात्स्पर्शद्विर्भावस्य निमित्तत्वं तेन संयुक्तः पूर्वस्पर्शः तकारो न द्विरुच्यते । अत्र पूर्वस्थानेन निषेधः परस्य पूर्वेण । यत्र चोभयतः स्पर्शैः संयुक्ताः शषसाः सह ॥ तत्र नाद्यः क्रमो ज्ञेयो नापरो बोधितो बुधैः ॥ २ ॥ प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ १३८ ॥ द्वितीयाः प्रथमैश्चतुर्थास्तृतीयैः सह द्विरुच्यन्ते । परिभाषेयम् । यत्र द्वितीयानां चतुर्थानां च द्विर्भावः प्राप्तस्तत्रेदमुपतिष्ठते । विकख्याय । शीग्घ्राय । परमेष्ठी ॥ विष्णुकल्ली ॥ अन्तःपदेऽपञ्चमाः पञ्चमेषु विच्छेदम् ॥ १३९ ॥ पदमध्ये विद्यमानाः पञ्चमभिन्नाः स्पर्शाः पञ्चमेषु यममापद्यन्ते । विच्छेद इति यमसंज्ञा । रुक्क्मः । अग्ग्निः । वाक्क्ग्मम् । तनच्चिम । आर्त्नी । विद्द्मा ते । सिद्धमलम् । पाप्मने । अत्र "स्वरात्संयोगादेरिति" द्वित्वे जाते "विकारी यथासन्न" मिति प्रतिवर्गमाद्यानां जित्संज्ञकत्वात्प्रथमो यमः । द्वितीयानां जित्संज्ञकत्वात्सोष्मसंज्ञकत्वाच्च द्वितीयः । तृतीयानां धिसंज्ञकत्वात्तृतीयः । चतुर्थानां धिसंज्ञकत्वात्सोष्मसंज्ञकत्वाच्च चतुर्थः । एवं चत्वारः । अत एव चत्वारश्च यमाः स्मृता इति पाणिनीयशिक्षायामुक्तम् । एते ज्ञेयाः । न त्वेषामुच्चारणम् ॥ अशरीरं यमं

प्राङ्गरिति भिन्नाग्रामुक्तत्वात्केवलं ज्ञानमात्रफलम् ।
नानुस्वारः ॥ १४० ॥ अनुस्वारो न द्विरुच्यते ।
इम ँ स्तनम् ॥ सवर्णे ॥ १४१ ॥ सवर्णे परे
व्यञ्जनं द्विर्न्न भवति । संय्योमि । यन्ते ॥ ऋ-
वर्णे ॥ ॥१४२ ॥ ऋवर्णे परे न द्विरुक्तिर्भव-
ति ।, अनिष्टृतः । ऊष्मान्तस्थाभ्यइति प्राप्तम् । यमे ॥
१४३ ॥ यमे परे न द्वित्वम् । पक्क्नी । अत्र अन्तः-
पदइति ककारात्परे यमे जाते ककारस्य संय्योगा-
दित्वात्प्राप्तं द्वित्वन्न ॥ विसर्ज्जनीयः ॥ १४४ ॥ न द्वि-
रुच्यते । दिवः ककुत् । स्वरात्संयोगादिरिति प्राप्तम् ॥
स्ववर्गीये चानुत्तमे ॥ १४५ ॥ उत्तमभिन्ने स्ववर्गीये
वर्णे परे द्वित्वन्न । यत् ते । तत् देवानाम् । अनुत्तमे
किम् । तन्नः ॥ अवसितं च ॥ १४६ ॥ अवसानगतं
व्यञ्जनं न द्विरुच्यते । ऊर्क् । 'परन्तु रेफहकाराभ्या'-
मिति 'ऊष्मान्तस्थाभ्यश्चेति' वा ककारस्य द्वित्वप्राप्तिः ॥
द्वियकारम् ॥ १४७ ॥ इत्यधिकारः ॥ आप्याय्यमानो
यमो रय्यै धाय्या रूपं य्यवाय्यं नपाय्यं पौरुषेय्या हृदय्याय
सह रय्या निचाय्य सन्नाय्येति च ॥ ॥ १४८ ॥
इमानि दशरूपाणि द्वियकाराणि निपात्यन्ते, चका-
रोऽनुक्तसमुच्चयार्थः । तेन रय्या पोषेण । आप्याय्य-
मानो यमः । यम इति किम् । आप्यायमानो ऽम्-

स्ताग्र सोम, रय्यै त्वा । यजेति धाय्या रूपम् । तन्नो गीर्भिः श्रवाय्यम् । वर्त्ती रुद्रा नृपाय्यम् । पौरुषेय्या गृभः । नमो हृदय्याय च । सह रय्या निवर्त्तस्व । अग्ने ज्योतिर्न्निचाय्य । अरसि सन्नाय्यमाने ॥ द्विसकारं० भास्वरास्वेति ॥ १४९ ॥ इमे द्वे द्विसकारे 'स्वरात्सँय्योगादेरिति' द्वित्वे प्राप्ते द्विसकारत्वविधानं ज्ञापकम् । सामान्यतः अन्तस्थासु सकारस्य द्वित्वन्न । उक्तं च शिक्षायाम् । सकारस्य द्विरुक्तिर्य्या सा द्वयोरेव नान्यतः ॥ आ च भास्वा च रास्वेति सकारोऽत्र द्विरुक्तिजः । १ । अत एव केशवेनापि "न सो व्योम्नेति सूत्रमकारि ॥ न च्छ्टचिम्निसतयेभ्यस्त्वेकम् ॥ १५० ॥ चादिभ्यः सप्तभ्यस्त्व इत्यत्र एकमेव व्यञ्जनं न द्वे ॥ चत्त्वस्य योनिः । इत्त्वधेत् । चित्रन्देवानाम् । म्नित्रऽआदित्यानाम् । सत्त्वस्यऽस्टद्भिः । लोके तत्त्व । सचन्त यत्र पूर्व्वे ॥ वीड्वाय वार्ध्रीनसोद्राश्चराश्चेत् ॥ १५१ ॥ एतेषां त्रयाणां द्वित्वं न प्राणिवाचकाश्चेत् । नमो वीड्वाय च । वार्ध्रीनसस्ते मत्यै । अपा रुद्रो मासाम् । चराः किम् । समुद्राय शिशुमारान् । एतत्प्रकरणं ज्ञानार्थं क्वचिदुच्चारणार्थम् । न व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषोऽस्तीति श्रीभाष्योक्तेः ॥ स्वरोऽक्षरम् । सहाद्यैर्व्यञ्जनैरुत्तरैश्चावसितैरित्युक्तम् ।

तत्र स्वरयोर्मध्ये यत्रानेकं व्यञ्जनं तत्र किं पूर्वस्याङ्गं किं परस्येति निर्णयार्थमाह ॥ सँय्योगादिः पूर्वस्य ॥ १५२ ॥ सँय्योगस्यादिवर्णः पूर्वस्याङ्गम्भवति । इषेत्त्वा । अत्र द्वित्वे द्वौ तकारौ । तत्र प्रथमस्तकारः पूर्वस्य द्वितीयस्तकारो वकारश्च परस्य ॥ यमश्च ॥ १५३ यमश्च पूर्वस्याङ्गम् । रुक्क्मः । अत्र ककारो यमश्च पूर्वस्याङ्गं मकार उत्तरस्य ॥ क्रमजं च ॥ १५४ ॥ सँय्योगादेः परस्य द्वित्वेन जातं व्यञ्जनं क्रमजं तच्च पूर्वस्याङ्गम् । पार्श्श्व्यम् । रेफः एकः शकारः पूर्वस्य द्वितीयशकारवकारयकारा उत्तरस्य । वर्ष्ष्याय । रेफः एकः षकारः पूर्वस्य द्वितीयषकारयकारौ परस्य । बाह्व्वोः । हकार एको वकारः पूर्वस्य । द्वितीयो वकार उत्तरस्य । तस्माच्चोत्तरꣳ स्पर्शे ॥ १५५ ॥ क्रमजादुत्तरं व्यंजनं स्पर्शे परे पूर्वाङ्गं भवति । पार्ष्ष्ण्यां वा । रेफो द्वौ षकारौ पूर्वस्य णकारयकारौ परस्य । व्वर्ष्ष्मन् । रेफो द्वौ षकारौ पूर्वाङ्गं मकारः पराङ्गम् । यदर्थं पूर्वाङ्गपराङ्गत्वविचारस्तदाह ॥ व्यञ्जनꣳ स्वरेण सस्वरम् ॥ १५६ ॥ यद्व्यञ्जनं यस्योदात्तादेः स्वरस्याङ्गं तत्तत्स्वरयुक्तं स्यात् । उक्तान्युदाहरणानि । उक्तं च, स्वरउच्चः स्वरो नीचः स्वरः स्वरितएव च ॥ स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥ सँय्योगपूर्वा व्यञ्जनान्ता अवसानगताः स्वरा द्विमा-

त्राः ॥ १५७ ॥ द्विमात्रा इति ह्रस्वापेक्षया किञ्चित्का-लाधिक्यस्योपलक्षणं न तु दीर्घत्वस्य । उक्तं च शिक्षा-याम् । स्वराः सँय्योगपूर्व्वा ये व्यञ्जनान्तास्तथान्तगाः । एषां कालो द्विमात्रः स्यान्न तु दीर्घा हि ते स्मृताः । १ । अग्निः । तत् । जातः । तन् । उत । च । इति सामान्य-विकाराः ॥ स्वरितवर्ज्जमेकोदात्तं पदम् ॥ १५८ ॥ स्व-रितमक्षरं अस्ति यस्मिंस्तत्स्वरितवत्पदं वर्जयित्वा ए-कोदात्तं पदं स्यात् । एकः स्वरः पदे उदात्तः स्वरितो वा भवति । उत्सर्गोऽयम् । द्युदात्तानि तु वाचकानि वक्ष्यति । अवशिष्टं तु ॥ अनुदात्तम् ॥ १५९ ॥ अनुदा-त्तोऽस्त्यस्मिंस्तदनुदात्तं स्वरविशिष्टं स्यात् । सादन्यम् । वीर्य्यम् । अनमीवाः । अनुदात्तमित्यधिकारः ॥ नो नौ मे मदर्थे चिह्नकेषु ॥ १६० ॥ नः नौ मे एतानि पदानि अनुदात्तानि स्युः । आनः । तन्नौ । यन्मे । चिह्नकेष्वि-ति स्पष्टार्थम् । मदर्थ इत्युत्तरार्थम् । संदेहे साहचर्य्यं नियामकमिति सर्वादेशस्यैव ग्रहणं तेन मे इत्यादेश-विशिष्टस्य न । रायो मे ॥ मा च ॥ १६१ ॥ मा इ-त्येतत्पदं अस्मदर्थे विद्यमानं अनुदात्तं स्यात् । प्रमा-तिर । मदर्थे किम् । मा नो मित्रः ॥ वो वान्ते त्वदर्थे ॥ १६२ ॥ वः । वाम् । ते । इमानि पदानि युष्मदर्थे वर्तमा-नानि अनुदात्तानि स्युः । देवो वः । सँत्वाम् । मा ते ।

त्वदर्थे किम्। ते नोऽअर्वन्त॥ ॥ त्वा च॥ १६२ ॥ इद-
मनुदात्तं स्यात्। भूताय त्वा। गन्धर्वस्त्वा ॥ पूर्ववाननु-
देशः ॥ १६३ ॥ पूर्वोक्तार्थवाचकं यत्पश्चादुच्चारितं प-
दमनुदात्तं स्यात्। घासमस्मै। एषाङ्कृणुहि। आ-
स्मिन्। पूर्ववानिति किम्। अस्मै जनाय। एषाम्प-
शूनाम्। अस्मिंत्सधस्थे॥ असि ॥ १६४ ॥ इदमनु-
दात्तं स्यात्। वेदोऽसि। कृष्णोऽसि॥ यथा गृभो भु-
वोऽग्निभ्यः ॥ १६५ ॥ गृभ इत्यादिभ्यो यथेति
पदमनुदात्तं स्यात्। जीवगृभो यथा। अग्निभुवो य-
था। अग्नयो यथा। एभ्यः किम्। करद्यथा ॥ गि-
र्वणः॥ १६६॥ इदमनुदात्तं स्यात्। परिस्त्वा गिर्वणः॥
अग्ने घृतेनेति च ॥ १६७ ॥ अग्ने इत्येतत्पूर्वं घृतेने-
त्येतत्पदमनुदात्तम्। आग्ने घृतेन। अग्ने किम्। अ-
ङ्गिरो घृतेन॥ प्रचिकितश्च ॥ १६८ ॥ प्रेत्येतत्पूर्वकं
चिकित इत्येतत्पदमनुदात्तम्। प्रचिकितो मनीषा।
एनोऽनापे ॥ १६९ ॥ एन इत्येतत्पदमनुदात्तं पापेऽवि-
द्यमानं चेत्। उदेनम् ॥ मैनाम्। आत्त्वेनत्। अवि-
शेषात्सर्वलिङ्गं गृह्यते। अपापे किम्। एनश्चकृम ॥
इह पूर्वं श्रुतम् ॥ १७० ॥ इहेत्येतत्पूर्वं श्रुतमित्येत-
दनुदात्तम्। ममेदिह श्रुतम्। तस्याख्यातत्वादनुदा-
त्तमाख्यातमित्यनेनानुदात्तत्वे सिद्धे विधानं ज्ञापक-

म् । अथातो व्याख्यातस्य तेन नानुदात्तत्वम् । तेन वक्त्या अधोक्त्वमित्यस्य न निघातः । इह किम् । युवा-ना श्रुतम् ॥ मन्ये पदपूर्वं० सर्व्वत्र ॥ १७१ ॥ पद पूर्व्वमन्ये इत्येतदनुदात्तम् । होतारम्मन्ये । सर्वत्रेति यद्वृत्तोपपदाच्चेति निषेधबाधनार्थम् । तम्मन्ये यः ॥ वा च कमुचितत्समस्माद्वहस्मवद्ध्मव्यौ अरे ख्विन्निपा-पाताश्चेत् ॥ १७२ ॥ वा इत्यादयस्त्रयोदशशब्दा अनुदा-त्ता निपाताश्चेत् । वातो वा ॥ अग्निश्च । इमा नु कम् । य॒ऽउसम्भूत्याम् । हृदया विधश्चित् । अघायतः सम-स्मात् । आघा ये । दधे ह गर्भम् । हि ष्मातें । पी-यति त्वोऽअनुत्त्वः । काऽई मरे । आविर्म्मर्य्याः । अ-जारे पिशङ्गिला । कः स्वित् । निपाताः किम् । चिद-सि । द्रविणमष्ट यज्ञम् । अन्ये निपाता आद्युदात्ता इति । अत्रो निपाता आद्युदात्ताइत्युक्तत्वात् ॥ पदपूर्व्वमामन्त्रितमनानार्थे पादादौ ॥ १७३ ॥ पादादौ अविद्यमानं पदपूर्वं सम्बोधनविभक्त्यन्तमनुदात्तं स्या-त् तत्पदमामन्त्रितं च परस्वरानन्वितं । अरातिम-ग्ने । रोदसी विष्णो । नियुद्भिर्व्वायो । तव पूषणः । पदपूर्व्वं किम् । अग्ने व्रतपते । वायोऽअस्मिन् । पूषन्तव । अनानार्थे किम् । अन्विहि देवाः । अपा-दादौ किम् । इषन्नग्ने ॥ तेनानन्तरा षष्ठ्येकपदव-

त् ॥ १७४ ॥ आमन्त्रितेन अर्थतो देशतश्च सम्बद्धं प-
ष्ठ्यन्तमेकपदवत्स्यात् । विश्वासां भुवां पते । उच्चि-
ष्टं मन्त्राणस्पते । दैव्याः पूर्वं पवस्व । अत एव "न
पृथिवीत्यादिनिषेधः फलः । अनन्तरं किम् । पती त्वमस्य ।
यस्योषधीः प्रसर्पथ । अत्र यस्येति अङ्गमङ्गमित्यनेन
सम्बध्यते ॥ न पृथिवि देवयजन्योषध्या देव भूरिः प-
वित्रपते पवित्रपूतस्यापान्नपान्नृणान्नृपते सोमाग्नेः
सोमेन्द्रस्य सोम सुवीर्यस्य सोम विश्वेषान्देवानां प्र-
जापते यस्य यस्य देवाग्ने तवाग्ने व्राजस्याग्ने वरु-
णस्यापेऽस्माकम् ॥ १७५ ॥ एतानि पञ्चदश ष-
ष्ठ्यन्तानि नैकपदवत्स्युः । प्रतिरक्षन्निति किम् । अ-
पान्नपाद्यो वः ॥ सुमङ्गल सत्यराजन्विकिरिद्र विलो-
हित दरिद्र नीललोहित धेयस्कर भूयस्कराम्बेऽअ-
म्बिके बालिके मारुत्ये महेश्व रुद्र०मिते मरुतोऽअश्वि-
ना यज्ञ्ये गर्व्ये द्यावापृथिवीऽउरो अग्ना ३ इपत्नीवँ-
स्याग्ने३ न् शाचीइन्द्रोदुष्टम शिवतम सहस्राक्ष्र मतेपुधे
व्वसुपते व्वसुदावन् ॥ १७६ ॥ एतान्येकोनत्रिंशदा-
मन्त्रितानि नानुदात्तानि । अत यानि अपूर्वाणि पा-
दादीनि वा तेषामनुदात्तत्वाभावः सिद्ध एव । अन्ये-
षामनेन निषेधः ॥ इडोत्तराणि नव स्वानोत्तराणि
षडग्न्युत्तराणि चत्वारि भगोत्तराणि चेन्द्रोत्तरमेक-

ठं॰ सिनीवाल्युत्तरं च प्रजापतये ब्रह्मन्निति च ॥ १७७ ॥ इडशब्दादुत्तराणि नव । स्वानशब्दादुत्तराणि षट् । अग्निशब्दादुत्तराणि चत्वारि । भगशब्दादुत्तराणि चत्वारि । इन्द्रशब्दादुत्तरमेकं । सिनीवालिशब्दादुत्तरमेकं, प्रजापतये शब्दादुत्तरे ब्रह्मन्निति । एतानि षड्विंशतिरामन्त्रितानि नानुदात्तानि स्युः । इडे । रन्ते । हव्ये । काम्ये । चन्द्रे । ज्योते । अदिते । सरस्वति । महि । विश्रुति । स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्त । कृशानो । अग्ने । इन्द्र । वरुण । मित्र । देवाः । भग । प्रणेतः । भग । सत्यराधः । । भग । इन्द्र । गोमन् । सिनीवालि । पृथुष्टुके । प्रजापतये । ब्रह्मन् ॥ भूतिरायुदात्तम् ॥ १७८ ॥ अथायुदात्ताधिकारः । भूतिरित्येतदायुदात्तं स्यात् । भूतिश्च मे । नमो भूत्यै येदम् ॥ कदा नरिष्येम पूर्वम् ॥ १७९ ॥ नरिष्येमेत्येतत्पूर्वं कदा आयुदात्तं स्यात् । नरिष्येम कदाचन । नरिष्येम किम् । कदाचन स्तरीः ॥ आमन्त्रितं च ॥ १८० ॥ सम्बोधनविभक्त्यन्तमायुदात्तम् । अग्ने गृहपते ॥ "तेनानन्तरेत्येकपदातिदेशात् ऊर्ज्जो नपादित्यत्र ऊर्ज्जः शब्द आयुदात्तः । वस्तुत ऊर्ज्जः शब्दस्तु अन्तोदात्तः । ऊर्ज्जो नपातम् । "पदपूर्वमिति तु एतस्यापवादः । तस्याप्रा-

शिनिषेधविषयस्यानोदाहरणम् ॥ कृष्णो ऽखगसँयोगे । १८१ । कृष्णशब्द आद्युदात्तः स्यात् । पशुवाचकस्य विशेषणं न चेत् । कृष्णोऽसि । कृष्णो राज्यै । अखगेति किम् । ग्वा कृष्णः । अत्र ग्वेत्यस्य कृष्णइति विशेषणम् ॥ व्ययवाँश्चान्तः । १८२ । विकारवाचकोन्तःशब्द आद्युदात्तः स्यात् । परोऽन्तः । व्ययवानिति किम् । अन्तर्भुवि । अयमव्ययम् अतो वचनादिकृतो विकारो न ॥ परः प्रधाने ॥ १८३ ॥ अयमाद्युदात्तः प्रधानवाचकश्चेत् । जातः परोऽग्न्यः । प्रधाने किम् । परो दिवा । अत्र परशब्दोऽन्यवचनः ॥ मात्रा च परिमाणे ॥ १८४ ॥ मात्राशब्द आद्युदात्तः परिमाणवाचकश्चेत् । कस्य मात्रा । परिमाणे किम् । विभूमात्रा । इदं मातृशब्दस्य तृतीयैकवचनम् ॥ दक्षिणाच ॥ १८५ ॥ अयमाद्युदात्तः । दक्षिणामारोह ॥ न दशविश्वकर्मानिषद्येन्द्रस्य पातु सदः सहस्र्येषु ॥ १८६ ॥ दशेत्यादिसप्तसु दक्षिणाशब्द आद्युदात्तो न । निषद्यादिषु त्रिषु अव्यवहितस्यासम्भवेऽपि निषेधो भवत्येव । तस्मिन्निति वर्णसप्तमीनिर्देशविषयं "पदे चेति ज्ञापकात् । दक्षिणा दश । दक्षिणा विश्वकर्मा । दक्षिणतो निषद्य । दक्षिणतऽइन्द्रस्य । दक्षिणतः पातु ॥ तसिलादि"ष्विति पुंवद्भावः । अत्र दीर्घान्तत्वाभावात्पूर्वसूत्रस्याप्राप्तौ निषेधो ज्ञा-

पकः । यत्किञ्चिदवयवभेदेऽपि कार्यं प्रवर्तत एवे-ति । अतएव "एनोऽपापे" इति आख्येनदित्यत्र भव-त्येव । दक्षिणासदः । दक्षिणासद्भ्यः ॥ कर्णः स्वाङ्गे ॥ १८७ ॥ कर्णशब्द आद्युदात्तः स्वाङ्गवाचकश्चेत् । क-र्णौ ते दन्ती । स्वाङ्गे किम् । कर्णो गर्दभः ॥ मह्नो नपुं० सके ॥ १८८ ॥ मह्न इत्येतदाद्युदात्तं नपुंस-कलिङ्गं चेत् । मह्नस्य । मह्नश्च मे । नपुंसके किम् । मह्नोऽग्निः । अयं पुल्लिङ्गः । श्रवश्च ॥ १८९ ॥ अर्च-चाद्युदात्तो नपुंसकश्चेत् । तत्र श्रवः । नपुंसके कि-म् । श्रवश्च मे । अयं पुंसि ॥ अन्धो वीर्ये ॥ १९० ॥ अन्धशब्द आद्युदात्तो वीर्यवाचकश्चेत् । अन्धस्य । वी-र्ये किम् । अन्धन्तमः । अत्रान्धशब्दो निविडार्थः ॥ ए-ता वर्णे ॥ १९१ ॥ अयमाद्युदात्तो वर्णवाचकश्चेत् । एताऽऐन्द्राग्नाः । एताश्चित्राः । वर्णे किम् । एता मे ॥ रोहितश्च केवलः ॥ १९२ ॥ केवलरोहितशब्द आद्युदात्तः । रोहितो धूम्ररोहितः । केवलः किम् । धूम्ररोहितः ॥ यज्ञो राट् ॥ १९३ ॥ यज्ञीशब्द आद्यु-दात्तो राट्शब्दपरश्चेत् । यज्ञी राट् । राट् किम् । यज्ञ्यसि ॥ ओषधीरनामन्त्रिते ॥ १९४ ॥ अनामन्त्रि-तओषधीशब्द आद्युदात्तः । याऽओषधीः । अनाम-

स्वाहा व्वाजः पशो नमः ॥ १९५ ॥ सर्वाद्यष्टशब्दा आद्युदात्ताः । सर्व्वँय्यत् । यत्र व्विश्वम् । धर्पामानुषः । व्विश्वा ऽआशाः । स्वाहा यज्ञम् । व्वाजश्च मे । पशः पृथिव्व्याम् । नमः पर्णाय ॥ असि शिवासुपदा पयस्वतीयज्ञे मधुमतीर्व्वर्च्चस्वानोजिष्ठभ्राजिष्ठशुष्मिणी भद्रद्वाच्च्याय वन्द्यो मेद्यो यम आदित्यस्त्रितः सोमेन स्वसेत्येतेषु ॥ १९६ ॥ शिवादिषु सप्तदशसु असिशब्द आद्युदात्तः स्यात् । असि शिवा । असि यज्ञे । भागोऽसि । मधुमतीर्न्नः । असि व्वर्च्चस्वानहम् । अस्योजिष्ठोऽहम् । असि भ्राजिष्ठोऽहम् । असि शुष्मिणी । असि भद्रद्वाच्च्याय । असि व्वन्द्यश्च । असि मेद्यश्च । असि यमः । अस्यादित्यः । असि त्रितः । असि सोमेन । असि स्वसा अत्र "सन्निकृष्टविप्रकृष्टयोरि"त्यनेन व्यवहितस्य असि स्योनेत्यसिशब्दस्य सुपदाशब्दपरत्वेऽपि आद्युदात्तत्वं । न पयस्वती सहचरितत्वात्सुपदा चासिति सुपदा शब्दस्य आद्युदात्तत्वनिमित्तत्वं । तेनासहचरितस्य स्योनासि सुषदासि ॥ धनदारत्नधाभ्यां च ॥ १९७ ॥ आभ्यां च परोऽसि शब्द आद्युदात्तः । धनदाऽअसि । रत्नधाऽअसि ॥ रायोऽपोषे ॥ १९८ ॥ रायइत्येतत्पदमाद्युदात्तं स्यात्पोषशब्दः परो न चेत् । रायो मे ।

तोतो रायः । अपोषे किम् । रायस्पोषम् ॥ न भागमीमिषयोः ॥ १९९ ॥ एतयोः परयो रायइत्येतदाद्युदात्तन्न । रायो भागम् । रायऽईमिषे ॥ त्रिधा बद्धहितयोः ॥ २०० ॥ एतयोस्त्रिधाशब्द आद्युदात्तः । त्रिधा बद्धः । त्रिधा हितम् ॥ सुकृतं भूते ॥ २०१ ॥ सुकृतपदमाद्युदात्तं भूतकालवाचकं चेत् । पृथुः सुकृतः । भूते किम् । सुकृतं च मे । अयं पुण्यवाचकः ॥ द्विरुदात्तानि ॥ २०२ ॥ अधिकारोऽयम् ॥ बृहस्पतिर्वनस्पतिर्नराशꣳसस्तनूनपान्ने तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवाऽअन्वेतवा इति च ॥ २०३ ॥ चकारादुत्तरसूत्रादनामन्त्रितानीत्यपकृष्यते । अनामन्त्रितानि बृहस्पतिरित्यादिद्वादशपदानि द्विरुदात्तानि भवन्ति । अनामन्त्रितानि किम् । तनूनपात्पथः । बृहस्पतेऽअति । वनस्पते वीडवङ्गः । द्यावापृथिवीऽउरो ॥ देवताद्वन्द्वानि चामन्त्रितानि ॥ २०४ ॥ आमन्त्रितानि वर्जयित्वा देवताद्वन्द्ववाचकानि पदानि द्विरुदात्तानि । अग्नीषोमौ । मित्रावरुणौ । देवतेति किम् । दीक्षातपसोः । अनामन्त्रितानि किम् । धेनुर्मित्रावरुणा ॥ इन्द्राबृहस्पतीभ्यामिन्द्राबृहस्पती इति नोभे ॥ २०५ ॥ अनयोः शब्दयोस्त्रोण्यक्षराण्युदा-

त्तानि स्युः । इन्द्राबृहस्पतिभ्यान्त्वा देवाव्यम् । इ-न्द्राबृहस्पती३ऊरुभ्याम् ॥ सर्व्वमग्ना ३ इ त्वाजी-३ऋचोनिति त्रिमात्राणि च ॥ २०३ ॥ अग्ना इत्या-दिपदत्रयं सर्व्वमुदात्तं स्यात् । त्रिमात्रोऽस्ति येषु तानि त्रिमात्राणि त्रिमात्रस्वरविशिष्टानि निपात्यन्ते । अग्ना३इ । त्वाजी३न् । शाची३न् ॥ प्रणवश्च ॥ २०४ ॥ अयंच सर्वोदात्तस्त्रिमात्रश्च स्यात् । मादयन्तामो ३ म्प्रतिष्ठ३ । ओं३ क्रतो ॥ विवेशा३इति चानुदात्त-म् ॥ २०५ ॥ उत्तरमपूर्वं इत्युत्तरसूत्राभ्यामपकृष्यते । अवसाने विद्यमानमनुदात्तं विवेशा३इति पूर्वं त्रिमा-त्रस्वरविशिष्टं निपात्यते । विश्वभुवनमाविवेशा३ । उत्तरं किम् । आविवेश काव्यन्तः । अनुदात्तं कि-म् । येषु विश्वभुवनमाविवेश । हिरण्यगर्भ इत्य-ध्याये विवेशपदस्य चतुर्वारमेकस्मिन्दर्भे पठितत्वात्पू-र्वत्वस्य सापेक्षत्वात्तदध्यायस्यस्यैव सुतत्वम् । तेनान्य-त्र अत्रा२ ॥ ऽआविवेश । अभिसंविवेशेत्यादौ न ॥ आसीदितिचोत्तरँ विचारे ॥ २०६ ॥ विचारे वर्त्त-मानमवसानस्थं आसीदितिपदमनुदात्तविशिष्टं नि-पात्यते । उपरि स्विदासीत् । विचारे किम् । स्वि-त्कथाऽसीत् ॥ पूर्व्वमन्तोदात्तम् ॥ २०७ ॥ विचारे वर्त्तमानं पूर्वमन्त्रमध्यस्थमासीदितिपदमन्तोदात्तं स्या-

त् । त्रिमात्रं च निपात्यते । अधः स्विदासी३त् । विचारे किम् । का स्विदासीत् । अन्तोदात्तमित्यधिकारः ॥ द्वन्द्व इन्द्रसोमपूर्व्वं पूषाग्निवायुषु ॥ २०८ ॥ पूषादिषु त्रिषु उत्तरपदभूतेषु इन्द्रसोमपूर्वपदकं द्वन्द्वमन्तोदात्तं स्यात् । इन्द्रापूष्णोः । इन्द्राग्नी तमप । इन्द्रवायुभ्याम् । सोमापौष्णः ॥ अग्निश्चेन्द्रे ॥ २०९ ॥ इन्द्रशब्दे उत्तरपदे सति अग्निपूर्वो द्वन्द्वोऽन्तोदात्तः स्यात् । ऋक्सामयोः शिल्पे ॥ यतो गतौ ॥ २१० ॥ यत इत्येतत्पदमन्तोदात्तं स्याद्गत्यर्थकं चेत् । स्वर्य्यतो धिया । गतौ किम् । यतो जातः प्रजापतिः ॥ पायोर्व्विशः ॥ २११ ॥ पायुशब्दाद्विश इत्ययमन्तोदात्तः । पायुर्व्विशः ॥ पायोः किम् । दैवीर्व्विशः ॥ आयुरर्य्यमोर्व्विशश्च स्तिभ्यः ॥ २१२ ॥ अर्य्यमादिभ्यस्त्रिभ्यः पर आयुःशब्दोऽन्तोदात्तः । अर्य्यमायुः । उर्व्वश्यायुः । विधानसामर्थ्याद्व्यवधानेऽपि । कृष्णमस्ति । आयोद्धा । एभ्यः किम् । आयुर्म्मे ॥ अस्य रोचनासौ बोधा मे पारम्पुरऽएतारो दिवः कोऽहन्त्वमहीं व्यऽईशऽईशानेभ्यः ॥ २१३ ॥ रोचनादिद्वादशभ्यः परोऽस्य शब्दोन्तोदात्तः । रोचनाऽस्य । असावस्य पिता । बोधा मेऽअस्य । तमसस्पारमस्य । पुरऽएतारोऽअस्य । दिवोऽअस्य पृष्ठम् । कोऽस्य ।

स्वेऽहमस्य। त्वमस्य यन्ता। महीमस्य स्तोत्रे, यऽईमो-ऽअस्य। ईशानमस्य॥ प्रत्नाय्यज्ञस्य हविषः पाहीत्यातं मद्ध्वो यजमानस्य होतुरजरासो लोकेषु च ॥ २१४ ॥ प्रत्नामित्याद्येकादशसु अस्येत्यन्तोदात्तं स्यात्। अस्य प्रत्नाम्। अस्य यज्ञस्योद्वचः। अस्य हविषस्तमना। सुमनाऽअस्य पाहि। अस्येदिन्द्रो वावृधे। अस्य यन्ता। अस्य मद्ध्वः पिबत। अस्य यजमानस्य। अस्य होतुः प्रदिशि। अस्याजरासः। अस्य लोकः सुतावतः। अनुदात्तमन्यत् ॥ २१५ ॥ उक्तान्यं यदस्येतिपदमनुदात्तम्। कच्यस्य विष्ठाः। षडस्य विष्ठाः॥ अनुदात्तमाख्यातमामन्त्रितवत् ॥ २१६ ॥ तिङन्तमामन्त्रितवत्पदं पूर्वमपादादौ विद्यमानं परस्परान्वितार्थकं चेदनुदात्तम्। पशून्पाहि। हव्यꣳ रक्ष। पदपूर्वं किम्। ऽयन्तु वयः। विदेदग्निः। अपादादौ किम्। अरातीः सहस्व। परस्परान्वितार्थकं किम्। विष्णो पाहि। पाहि यज्ञम् ॥ पराऽपावप्रतिपर्य्यन्वध्यत्यध्याङ्प्रसन्निर्दुरुन्निविस्वभि ॥ २१७ ॥ परा। उप। अव। प्रति। परि। अनु। अधि। अति। अभि। आङ्। प्र। सम्। निर्। दुर्। उत्। नि। वि। सु। अभि। एते विंशतिरुपसर्गाः। तथा चोक्तम्। विंशतेरुपसर्गाणामुक्ता एकाक्षरा नव। आ-

द्युराच्चा दश्रैतेषामन्तोदात्तमभिस्त्वयम् । १ । उप-
सर्गं उपसर्गे ॥ २१८ ॥ उपसर्ग उपसर्गे परेऽनुदात्तः । स-
म्प्रच्यवध्वम् । सम्प्रयात ॥ आम्रेडिते चोत्त-
रः ॥ २१९ ॥ द्विरुच्चारणे पर उपसर्गोऽनुदात्तः ।
प्रप्र यज्ञपतिम् । सꣳसमित् ॥ कृदाख्यातयोश्चो-
दात्तयोः ॥ २२० ॥ उदात्तोऽस्ति ययोरुदात्तवति कृ-
दन्ते उदात्तवत्याख्याते परे उपसर्गोऽनुदात्तः । विभ्रा-
जमानः । सम्भरन्ति । उदात्तयोः किम् । उपयुक्ता-
सि । अवधूतम् ॥ नाध्येकाक्षरस्य स्वरसन्धेयेऽकृ-
ति ॥ २२१ ॥ अभिरेकाक्षरश्चोपसर्गः स्वरात्मके उ-
पसर्गेण सन्धिमति कृदन्तभिन्ने परेऽनुदात्तो न स्या-
त् । अभ्याऽधामि । अभ्यषिञ्चन् । व्याकरोत् ।
न्यषीदत्पिता नः । व्यदधुः । अकृति किम् । एज्ज्या-
ऽऽप्य ॥ आपूतजातयोः ॥ २२२ ॥ आङित्ययमुपसर्गः
पूतजातयोः परयोरनुदात्तो न स्यात् । आपूतः । आ-
जातः ॥ अधि नि प्र प्रति श्रितानिर्णं प्रभानवः पच-
तेषु ॥ २२३ ॥ अधीत्यादयश्चत्वारो यथासङ्ख्यं श्रि-
तादिषु चतुर्षु नानुदात्ताः । अधिश्रिताः । निश्च-
न्न्यनिर्णम् । प्रभानवः सिस्रते । प्रतिपचता गृभीषत ॥
उज्जेषमावर्त्तेऽआपनीफणत्सꣳसनिष्यदत्सꣳवर्तं प्रया-
णꣳसञ्चरन्तꣳसꣳरभध्वं प्रसितिं विक्रमस्व-

त्येष्वनु ॥ २२४ ॥ ऊर्ज्जेषमित्यादिदशसु अनुरनुदात्तो न । अनूर्ज्जेषम् । अन्वावर्त्ते । अन्वापनीफणात् । अनुसर्ठ॰सनिष्यदत् । अनुसंव्वतम् ॥ अनुप्रयाणम् । अनुसञ्चरन्तम् । अनुसर्ठ॰रभद्दम् । अनुप्रसितिम् । अनुविक्रमस्व ॥ आोपप्रोदात्ते ॥ २२५ ॥ आ । उप । एतौ उदात्ते प्रशब्दे नानुदात्तौ भवतः । आप्रयच्छ । उपप्रागात् ॥ अभि प्रेह्युपसम्प्रयातप्रयातमुष्वासुषाव ॥ २२६ ॥ अभिप्रेहीत्यादि चत्वारि निपात्यन्ते । प्रकृत्याऽऽख्यातमाख्यातपूर्व्वम् ॥ २२७ ॥ नानुदात्तम् । पिबन्तु मदन्तु व्यन्तु ॥ उदात्तोऽस्ति यस्मिन्नुदात्तवतः आमन्त्रितात्परमाख्यातन्नानुदात्तम् । अग्ने पवस्व । होतर्य्यज । एकान्तरादपि ॥ २२८ ॥ एकपदान्तरितादपि उदात्तवतआमन्त्रितात्परमाख्यातन्नानुदात्तम् । ब्रह्मान्नश्च्वक्ष्यामि । अपिशब्दात्क्वचिदनुदात्तम् । इन्द्रायाहि । एतन्निर्णये सम्प्रदाय एव शरणम् ॥ यद्वृत्तोपपदाच्च ॥ २२९ ॥ च अप्यर्थे । यदा यच्छब्देन वृत्तं सम्पादितं यत् यदि यतः यत्र यथा ये इत्यादि सर्व्वविभक्त्यन्तं यद्वृत्तं तदुपपदं अर्थतः सम्बद्धं येन पदेन

ऽग्रोचथाः । यथा समुद्रद्रऽएजति । यऽउपरासऽ-
ईयुः । दूरस्थस्यापि अर्थतः सम्बन्धो ग्राह्यः । तथा चो-
क्तम् । यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ॥
अर्थतो ह्यसमानानामानन्तर्य्यमकारणम् ॥ १ ॥
हेश्च ॥ २३० ॥ हिशब्दादुत्तरमाख्यातन्नानुदात्त-
म् ॥ आपो हिष्ठ ॥ उत्तरेऽपि ॥ २३१ ॥ हिशब्दे
परे चाख्यातन्नानुदात्तम् । वामुशन्ति हि ॥ ने-
त् ॥ २३२ ॥ अस्मान्निपातसमुदायात्परमाख्यातं
नानुदात्तम् ॥ नेत्त्वदपचेतयातै ॥ समनसस्कर-
त् ॥ २३३ ॥ समनसइत्यस्मात्परं करित्याख्यातं
नानुदात्तम् । असपत्नाः समनसस्करत् ॥ द्वयोः
पूर्वं समुच्चये ॥ २३४ ॥ द्वयोराख्यातयोः समुच्चये
वर्त्तमानयोः पूर्वन्नानुदात्तम् । शम्मी च स्त्यो व्वर्म्म च
स्त्यः । शन्न व्वहन्न परि च व्वहन्न । समुच्चये किम् । तन्त-
मिहतं व्वज्जेण तन्तमिहतम् ॥ इति प्रकृतिस्वराः ॥ अर्थः
पदम् ॥ २३५ ॥ अर्थोऽस्ति यस्मिन्नर्थवाचकः । अक्षर-
समुदायोऽक्षरं वा पदं स्यात् । एषः । सः । तत् ।
उत । त्वा । आ । अस्तु ॥ तच्चतुर्द्धा ॥ २३६ ॥ त-
त्पदं चतुःप्रकारं स्यात् । उक्तं च । क्रियावाचकमाख्यात-
मुपसर्गो विशेषकृत् ॥ सत्त्वाभिधायकन्नाम निपाताः
पादपूरणाः ॥ २३७ ॥ अर्पयतु । पाहि । इत्याद्याख्यात-

म्। परा। उप। इत्यादयो विंशतिरुपसर्गाः। देवः। सविता। इत्यादीनि नामानि। वा च उतेत्यादयो निपाताः॥ पदविच्छेदोऽसंहितः॥ २३८॥ पदे पदे विच्छेदो विलम्बेनोच्चारणं असंहितः। न संहिता यस्मिन्सः पदपाठः। भिसङ्गकेषु विसर्गस्य लोपादिविसर्गान्तत्वस्वरान्तत्वनिर्णयार्थं सन्दिग्धानि लिख्यन्ते। त्रिधाम्भ्याजदजयस्पृधः। त्रिधाम्भ्या त्रिराजति। इति पदद्वये ऊष्मान्तं ऊष्मा विसर्गः। अन्यत्र स्वरान्तम्। विश्वा रूपाणि॥ २३९॥ पृथिव्यापदं मन्थीत्यस्मिन्स्वरान्तमन्यत्रोष्मान्तम्। इमा अदं विभ्भ्या। वः। ब्रह्म हरीयुक्ता जनानुकम्। इति सप्तसु स्वरान्तम्। अन्यत्रोष्मान्तम्। इमा रुद्रायेत्यादि। व विष्णो बभूव नासत्या भिषजा न आवोढं या देवा हविषा नो रुडातः। नोऽअच्छ त्रिसुम्न इत्येतेषु दशसु तादिति स्वरान्तमन्यत्रोष्मान्तम्। ताः। नः। हिन्वन्तु। हविर्ष्मत्योः साध्यादा इति यथासङ्ख्यं स्वरान्ते अन्यत्र विसर्गान्ते। आभ्रीद्दाः। उत्रसुभिः॥ २४०॥ उत्तरिवो त्रिदध्युत्रमित्यनयोर्धिष्ण्यास्वरान्तमन्यत्र विसर्गान्ते। ऊर्चिषे। धिष्ण्या। ये॥ मर्त्तो वरीत मर्त्तभ्व गिनः परोमर्त्तास्ते मर्त्तइति च॥ २४१॥ एतेषु चतुर्षु मर्त्तशब्दोऽयकारः। अन्यत्र मर्त्त्यः॥ क्रमोन्नाद्दृत्तिः पदेषु॥ २४२॥ क्रमप्रकरणे उक्ता आद्दृत्तिः

पदपाठे स्यादवसानवर्ज्जम् ॥ तद्यथा॥ पूर्व्वस्योत्तरसंहितस्य ॥ २४३ ॥ स्थितोपस्थितमवगृह्यस्य ॥ २४४ अन्तःपदे दीर्घीभावे ॥ २४५ ॥ विनामे॥ २४६ ॥ प्रगृह्ये ॥ २४७॥ रिफिते निरुक्ते॥ २४८॥ तत्रावग्रहवतः पदस्य स्थितोपस्थितं स्यात्। ये विधयः स्थितोपस्थितो वेष्टने न भवन्ति ते तत्प्रकरणे एव दर्शिताः। कुत्राव-ग्रहः कर्त्तव्यस्तत्राह ॥ समासेऽवग्रहो ह्रस्वसमकालः ॥ २४९ ॥ समास इत्यधिकारः। समासेऽवग्रहो ह्रस्वसमकालः एकमात्राकालो विरामः स्यात्। स च चर्च्चायां प्रदर्शनीयः सम्प्रदायात् ।अन्तःपार्श्व्यमित्य-न्तः। पार्श्व्यम् ।अनुरूपमित्यनु। रूपम्। व्रतपतऽइ-ति व्रत । पते। पुरोगाऽइति पुरः। गाः। मणिवा-लऽइति मणि। वालः। ऋटक्सामाभ्यामित्यृक्। सा-माभ्याम् । अवग्रहइत्यधिकारः ॥ तरतमयोश्चातिश-येऽश्चिणप्रत्यासङ्गे ॥ २५० ॥ समासाभावादारम्भः। अतिशये विद्यमानयोस्तरतमयोरवग्रहः स्यात्। द-च्चिणशब्दः प्रतियोगी न चेत्। पूर्णतरमिति पूर्ण। तरम्। प्रप्रितममिति प्रप्रि। तमम्। अदच्चिणेत्यादि किम्। द्यावापृथिव्योर्हदिशां पार्श्वं त्विभिस्त्वेषां देवानामु-त्तरमित्यत्रोत्तरमित्येव। अतिशये किम्। कारोतरः॥ श्वीतमहूतमसूतमगोपातमरत्नधातमवसुधातमाः पू-

र्वेण ॥ ३५१ ॥ एते शब्दाः पूर्वेणावगृह्यन्ते । देववीतममिति देव । वीतमम् । देवहूतममिति देव । हूतमम् । सुहूतममिति सु । हूतमम् । सुगोपातमऽइति सु । गोपातमम् । सुधातमऽइति सु । धातमः ॥ सर्पदेवजनेभ्यश्च ॥ ३५२ ॥ इदं च पूर्वेणावगृह्यते । सर्पदेवजनेभ्यऽइति सर्प । देवजनेभ्यः ॥ तुग्रावृधमुत्तरेण ॥ ३५३ ॥ इदमुत्तरेणावगृह्यते तुग्रावृधमिति तुग्राव । धमम् ॥ रायस्पोषदे विजावेति च ॥ ३५४ ॥ इमे चोत्तरेणावगृह्यते । रायस्पोषदऽइति रायस्पोष । दे । विजावेति विजा । वा ॥ बहुप्रकृतावागन्तुना पर्वणा ॥ ३५५ ॥ बहुपदसमासे पाश्चात्कालिकेन पदेनावग्रहः स्यात् । प्रजापतिरिति प्रजा । पतिः । सुप्रजाऽइति सु । प्रजाः ॥ तद्वति तद्धिते न्यायसंहितं चेत् ॥ ३५६ ॥ वतीति तन्त्रेण द्विरुच्चारितं तदस्ति यस्मिंस्तः तस्मिन्नर्थे विद्यमाने तद्धिते वति प्रत्यये च परेऽवग्रहः स्यात् । शास्त्रोक्तसन्धिमत्पदं चेत् । मधुमदिति मधु । मत् । सँव्वतमिति सम् । व्वतम् । न्यायसंहितमिति किम् । मरुत्वान् । अत्र "स्पर्शोऽपञ्चम" इति तृतीयः शास्त्रसिद्धोपि न कृतः । अतो न भवति ॥ शश्वन्ता-तातिषु च ॥ ३५७ ॥ शमित्यादिषु चतुर्ष्ववग्रहः स्या-

तृ । ऋतुथाऽइत्यृतु । थाः । अमृतत्वमित्यमृत त्त्वम् । देवत्रेति देव । त्रा । ज्येष्ठतातिमिति ज्येष्ठ । तातिम् ॥ धात्वर्थे यकारे स्वरपूर्वे ॥ ३५८ ॥ धातुसञ्ज्ञानिमित्तभूतो यकारः क्यजादिः स्वरपूर्वे तस्मिन्परेऽवग्रहः स्यात् । इषयमाणाऽइति इष । यमाणाः । धात्वर्थे किम् । जायमानः ॥ वाꣳसौ च भूतकाले स्वरेण ह्रस्वादनुषि ॥ ३५९ ॥ स्वरेण तृतीया पञ्चम्यर्थे । ह्रस्वस्वरात्परभूते वांसशब्दे भूतकालार्थे परेऽवग्रहः स्यात्स उषरूपो न चेत् । यज्विवाꣳसऽइति यज्वि । वाꣳसः । सस्ववाꣳसऽइति सस्व । वाꣳसः । स्वरेण किम् । चिकित्वान् । ह्रस्वात्किम् । अन्यथाखीषम् । जिगीवाꣳसः । भूतकाले किम् । सुविद्वाꣳसऽइति सु । विद्वाꣳसः । अनुषि किम् । तस्थुषः ॥ प्रत्नपूर्वविश्वेमतुभ्यस्था ॥ ३६० ॥ एभ्यः पञ्चभ्यः स्था प्रत्ययेऽवग्रहः स्यात् । प्रत्नथेति प्रत्न । था । पूर्वथेति पूर्व । था । विश्वथेति विश्व । था । इमथेतीम । था । ऋतुथेत्यृतु । था ॥ ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये ॥ ३६१ ॥ ह्रस्वाद्व्यञ्जनाच्च परे भकारादौ विभक्तिसञ्ज्ञे प्रत्यये परेऽवग्रहः स्यात् । अग्निभिरित्यग्नि । भिः । धावद्भ्यऽइति धावत् । भ्यः । तक्षभ्यऽइति । तक्ष । भ्यः । समिद्भिरिति

समित् । भिः । ह्रस्वेत्यादि किम् । व्रातेभ्यः ।
पत्नीभ्यः । विभक्तीति किम् । गर्दभः । स्विति चान-
तौ ॥ ३६२ ॥ ह्रस्वव्यञ्जनाभ्यामकृतषत्वे सुइति
विभक्तिप्रत्यये परेऽवग्रहः स्यात् हृत्स्विति हृत् ।
सु । अप्स्वित्यप् । सु । धामस्विति धाम । सु । अन-
तौ किम् । अग्निषु । स्नुषु । विभक्तीति किम् ।
असुम् । ह्रस्वेति किम् । यासु । वर्णसङ्ख्येऽन्यत-
रतः ॥ ३६३ ॥ समासइति मण्डूकप्लुतिन्याये-
नानुवर्त्तते मध्ये त्वसम्भवान्न सम्बध्यते । वर्णवाच-
के सङ्ख्यावाचके च समासे विकल्पेनावग्रहः स्यात् ।
धूम्ररोहितइति धूम्र । रोहितः । पञ्चदशेति प-
ञ्च, दश । त्रयोदशेति त्रयः । दश । विभाषितत्वात् ।
त्रिनवत्रयस्त्रिंशाविति त्रिनवत्रयस्त्रिंशौ । अत्र
न । व्यवस्थितविकल्पः । सम्प्रदायानुसारेण पठनी-
यम् ॥ अनुदात्तोपसर्गो चाख्याते ॥ ३६४ ॥ अनुदा-
त्ते उपसर्ग आख्यातपरेऽवग्रहः स्यात् । उपधावती-
त्युप । धावति । सम्भरन्तीति सम् । भरन्ति ॥ गिरि-
त्रशयोः ॥ ३६५ ॥ गिरिशब्दोऽवगृह्यते त्रशयोः पर-
योः । गिरिशेति गिरि । श । गिरित्रेति गिरि । त्र ॥ इ-
वकाराम्रेडितायनेषु ॥ ३६६ ॥ इवकारादिषु चतुर्ष्वव-
ग्रहः स्यात् । शुचीवेति शुचि । इव । वषट्कारै-

भिरिति वषट् । कारेभिः । सꣳसमिति सम् । सम् । प्रायनायेति प्र । अयनाय ॥ एकात्समीची ॥ ३६७ ॥ एकशब्दात्परः समीचीशब्दोऽवगृह्यते । एकम् । समीचीऽइति सम् । ईची । एकात्किम् । समीचीऽइति समीची । उरसा ॥ त्वायवः शँय्योर्बर्हिर्द्योऽस्मयुर्मृन्मयीं सुम्नयाशुया साधुया धृष्णुया विशालमनुया ॥ ३६८ ॥ एतान्येकादशपदानि सावग्रहाणि स्युः । त्वायवऽइति त्वा । यवः । शँय्योरिति शम् । योः । बर्हिर्द्वेति बर्हिः । धा । अस्मयुमित्यस्म । युम् । मृन्मयीमिति मृत् । मयीम् । सुम्नयेति सुम्न । या । आशुयेत्याशु । या । साधुयेति साधु । या । धृष्णुयेति धृष्णु । या । विशालमिति वि । शालम् । अनुयेत्यनु । या ॥ मृगयुमुभयादतोऽपामार्गं किम्पूरुषमिति च ॥ ३६९ ॥ एतानि चत्वारि पदान्यवगृह्यन्ते । मृगयुमिति मृग । युम् । उभयादतऽइत्युभय दतः । अपमार्गेत्यप । मार्गं । किम्पुरुषमिति किम् । पुरुषम् ॥ अधीवासमित्येके ॥ ३७० ॥ एकशब्दो मुख्यार्थः । एतत्सावग्रहं स्यात् । अधिवासमित्यधि । वासम् ॥ प्रतिषेधे नावग्रहः ॥ ३७१ ॥ प्रतिषेधवाचिनि पूर्वपदेऽवग्रहो न स्यात् । अश्नसा । अनिरा । उच्चारेणा-

कारेण ॥ ३७२ ॥ प्रतिषेधवाचिनः परेणाकारेणा वग्रहो न स्यात्। अनाततायं। अनाधृष्ष्याः ॥ द्वापूर्व्वा ॥ ३७३ ॥ द्वा इतिपूर्वपदं नावगृह्यते। द्वादश ॥ सङ्ख्यापूर्व्वश्चा धा ॥ ३७४ ॥ सङ्ख्यावाचकपूर्वपदं धाइत्यस्मिन्परे नावगृह्यते। त्रिधा। द्वेधा। कतिधा ॥ द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्व्वपदानि ॥ ३७५ ॥ स्वरान्तपूर्वपदमेषां तानि द्विवचनान्तानि नावगृह्यन्ते। मित्रावरुणाभ्याम्। अग्निषोमौ। स्वरान्तेत्यादि किम्। ऋक्सामयोरित्यृक्। सामयोः ॥ तद्धिते चैकाक्षरवृद्धावनिङ्गिते ॥ ३७६ ॥ तद्धिते सत्येकाक्षरस्य पूर्वपदस्य वृद्धौ उत्तरपदेनाव्यवहितायामवग्रहो न स्यात्। सौभाग्यम् ॥ नैष्टुभेनेति नै। स्तुभेन। अनिङ्गिते किम्। साम्राज्यमिति साम्। राज्यम्। एकाक्षरे किम्। आनुष्टुभमित्यानु। स्तुभम् ॥ अञ्चतिसहत्योः छलोपे ॥ ३७७ ॥ छलोपे सति अञ्चतिसहत्योः परयोर्नावग्रहः स्यात्। प्राङ्। प्रत्यङ्। ऋताषाट्। छलोपे किम्। आच्च्येत्या। अच्य। पृतनासह्यायेति पृतना। सह्याय। अनुरुसुभ्यां छलोपे ॥ ३७८ ॥ अञ्चौ सहतौ च परेऽवग्रहनिषेधो न स्यात्। उरूच्यञ्चमित्युरु। व्यञ्चम्। सुषाहमिति सु। साह-

म् ॥ समिदाभ्यांवत्सरः ॥ ३७९ ॥ सम् । इदा

आभ्यां वत्सरेऽवग्रहो न स्यात् । संवत्सरः । इदा व-

त्सरः । समिदाभ्यां किम् । परिवत्सरऽइति प-

रि । वत्सरः ॥ प्राग्निभ्यामनिन्धौ प्रश्ले-

षे ॥ ३८० ॥ प्र अग्नि इत्येताभ्यां इन्धधातुभिन्ने परे

एकीभावसन्धाववग्रहः स्यात् । प्राणः । आग्निध्र-

म् । अनिन्धौ किम् । प्रेद्धऽइति प्र । इद्धः । प्राग्नि-

भ्यां किम् । अपानऽइत्यप । आनः । वीध्रायेति वि ।

इध्राय ॥ जनयत्याऽओषधयो हृषायिषत नहि च

नास्मभ्यमजावयो वलगम् ॥ ३८१ ॥ जनयत्या इ-

त्यादीन्यष्टौ नावगृह्यन्ते ॥ जनयत्यै त्वा । ओषधयः

प्रति । आगमाद्धृषायिषत । नहि तेषाममा च न ।

कदा चन । पावकोऽअस्मभ्यम् । उपहूताऽअजाव-

यः । अहल्लँवलगमुत्किरामि ॥ समानोऽनश्वमेधे ॥

॥ ३८२ ॥ समानशब्दो नावगृह्यते । अश्वमेधे न चे-

त् । ये समानाः । अनश्वमेधे किम् । समानऽइति

सम् । आनः । तेजोऽसीत्यध्याये एतदारभ्याध्यायच-

तुष्टयमश्वमेधसञ्ज्ञकम् ॥ वायुरसजातः समुद्रोऽहो-

रात्रे विश्वानरो विश्वाहाग्रहायणोऽसपत्ना गो-

धाग धूमाऽआशुशुक्षणिर्न्यग्रोधः पुरोडाशः प्रावणो-

भिरगोतमतस्करान्नसम्मसाश्वत्यऽउपस्तिम्मीकिन्वि-

श्वामित्रो गोपामन्यऽउगमङ्गानि कर्त्तीवन्तमदधा-
त्पत्नीरवन्तीहारेण प्राहृता घनाघनऽईंहृङन्याहृङ्-
शूघनासः क्रुवङ्क्रुचरः प्रियङ्गवो नीवारा एकादश
षोडश चन्द्रमाऽआयुवो व्याघ्रोऽनड्वान्गविष्ठि-
रः कपर्दिने पुलस्तये निषङ्गिणे कुलालेभ्यः क-
र्मारेभ्यः पुञ्जिष्ठेभ्यो द्वीप्याय नीप्याय किशंशि-
लायैलष्टदाः शूकाराय शूकृताय चराचरेभ्यः पाराव-
तान्गोलत्तिकाऽऽखुरजगरो विपन्यवो दाशायशाऽ-
आयुर्शं सुरामं बृहस्पतिर्वनस्पतिर्नराशंसं सुर-
भिर्निरिष्ठाये ॥ ३८३ ॥ एतानि सप्ततिपदानि नावगृ-
ह्यन्ते । इदं दिक्प्रदर्शनार्थम् । अन्यान्यप्येवंविधानि
द्रष्टव्यानि । उतम्भनम् । आदिसंशयात् । विशौजाः
अन्यायसमासात् । उगणाः । उपसर्गैकदेशलोपात् । पुं-
स्तूम् । अनुनासिकोपधत्वात् । अवत्तानाम् । धात्वे-
कदेशलोपात् । इत्यादीनि । तथा चोक्तम् । आदिम-
ध्यान्तलुप्तानि समासान्न्यायभाञ्जि च ॥ नावगृह्णन्ति-
कवयः पदान्यागमवन्ति च ॥ १ ॥ चकारोऽनुक्तसमुच्चया-
र्थः । तेन धजीमानित्यत्र नावग्रहः । अत्र सम्प्रदाया-
नुसारेण व्यवस्था ॥ अनितावन्तर्विकारागमकप्रागु-
रका ॥ ३८४ ॥ इतिरहितं पदं मध्यस्थविकारागम-
सहितं पूर्वमुच्चार्य्य स्थितोपस्थितं कार्य्यम् । श्येयस्कर ।

श्रेयः करेति श्रेयः । करा । आयुष्पाः । आयुःपाऽइत्यायुः । पाः । ऋतस्पते । ऋतपतऽइत्यृत । पते । अहर्पतये । अहःपतयऽइत्यहः । पतये । दुधुक्षन् । दुधुक्षन्निति दुधुक्षन् । विश्पतीवेति च ॥ ३८५ ॥ इदं च पूर्वमुक्ता स्थितोपस्थितं कर्त्तव्यम् । विश्पतीवोपस्थिते ॥ ३८६ ॥ विश्पतीदमिवे परे प्रकृत्या भवति । उपस्थिते विद्यमानं चेत् । विश्पतीव । विश्पतीवेति विश्पती । इव । संहितावदवग्रहः स्वरविधौ परश्च सर्व्वश्चेदनुदात्तम् ॥ ३८७ ॥ अवग्रहयोग्यं पूर्वं पदं स्वरविधौ संहितावद्भवति परं च सर्वञ्चेत्संहितावत्सर्वमनुदात्तञ्चेत् । आस्वरेत्यऽइत्यास्वरे । स्त्यः । "नोदात्तस्वरितोदय"मिति निषेधात्प्रचयो न । प्रजावतीरिति प्रजा । वतीः । अत्रो"दात्तादनुदात्त"मिति वकारस्य स्वरितः । वह्नितममिति वह्नि । तमम् । अत्र"स्वरितात्पर"मित्यनेन तममित्यस्य प्रचयो भवति । स्वरविधौ किम् । धावद्भ्यऽइति धावत् । भ्यः । अत्र संहिताया अभावा"त्सम्पर्मोऽपञ्चम" इति तृतीयो न । सर्वानुदात्तत्वाभावे विशेषमाह ॥ इति परस्तिर्यङ्नीचान्तोदात्ते मध्योदात्तपर्वणि कावस्य वा ॥ ३८८ ॥ परमित्यनुवर्त्तते । अन्तोदात्ते-मध्योदात्ते वा पदे इतेः परभूते चर्चापदे परो

भागस्तिर्यङ्नीचोऽविकृतोऽनुदात्तो यस्मिन्नेतादृशः स्यात् । व्विकृचुरिति वि । कृचुः । सान्तपनेभ्यऽइ॒ति साम् । तपनेभ्यः । अत्र पूर्वसूत्रेण कृचुरित्यनयोः प्रचये प्राप्तेऽनेनानुदात्तएव विधीयते ॥ अन्तःपददीर्घीभावे ॥ २८९ ॥ पदमध्यस्थं दीर्घत्वं यस्य पदस्य तस्मिन् स्थितोपस्थितं स्यात् । मामहन्ताम् । ममहन्तामिति ममहन्ताम् । पूरुषः । पुरुषऽइति पुरुषः । इदं पदान्तस्थत्वाभावोपलक्षणम् । आयुनक् । अयुनगित्ययुनक् । अन्तःपदे किम् । पिब सोमम् । पिबा सोमम् ॥ विनामे ॥ २९० ॥ अन्तःपदइत्यनुवर्त्तते । अन्तः पदे दन्त्यस्य मूर्द्धन्यभावे सति स्थितोपस्थितं स्यात् । सुषाव । सुसावेति सुसाव । सीषधाम । सीसधामेति सीस । धाम । अन्तःपदे किम् । आपो हि ष्ठ । हिस्थ ॥ प्रगृह्ये ॥ २९१ ॥ प्रगृह्ये पदे स्थितोपस्थितं स्यात् । द्वेऽइति द्वे । द्यावापृथिवीऽइति द्यावा । पृथिवी । इन्द्रवायूऽइतीन्द्र । व्वायू । चमूऽइति चमू । अस्मेऽइत्यस्मे । त्वेऽइति त्वे ॥ मे ॥ २९२ ॥ इत्युदात्तस्य प्रगृह्यत्वात् । मेऽइति मे । रायः । उदात्तं किम् । मे व्वरुण । अमीऽइत्यमी ॥ प्लुतमितौ ॥ २९३ ॥ प्लुतमक्षरमितौ प्रकृत्या । एतस्योदाहरणं क्रमप्रकरणे वक्ष्यते ॥ "पदान्तपदाद्योः सन्धिरिति नियमात्

लुतस्य इतौ परे एकपदत्वात्‘‘ऋकारादिवर्णे ए-कार’’मित्यस्य प्राप्तौ प्रकृतिभावविधानं व्यर्थन्तज्ज्ञा-पयति । इतौ पदान्तकार्य्यम्भवति तेन दुरोणसदिति दुरोण । सत् । इत्यादौ‘‘नान्तःपद’’इति निषेधाभा-वा‘‘त्स्पर्शोऽपञ्चम’’इति तृतीयादि भवति । परेण सन्धिस्तु उभे संहिते चाह्वेत्युक्तत्वात्स्थितस्य भिन्नप-दत्वाद्भवति । अपहृतमित्यप । हृतम् । प्रतिज्ञासूत्र-स्य धर्मा न भवन्ति । प्रतिज्ञासूत्रशेषभूतामजोघ-नन्दिन्या‘‘अवग्रहः पदान्तव’’दिति सिद्धेऽपि अवग्र-हे पुनर्जकारविधानात्तेन यज्ञोऽइति यज्ञो ॥ ओका-रश्च ॥ २९४ ॥ अथमितौ प्रकृत्या । वायोऽइति वा-यो । ‘‘ओकारश्च पदान्ते’’इत्यनेन प्रगृह्यत्वे स्थितो-पस्थिते सति प्रगृह्यत्वात्प्रकृतिभावे सिद्धे पुनर्विधा-नं नियमार्थं इतावेव नान्यत्र । विष्णावेते । वायवि-ह । अनवग्रहः किम् । गविष्टाविति गो । इष्टौ । अत्र गोशब्दे स्थितोपस्थिते मा भूत् । ‘‘उकारो-ऽपृक्त’’इत्यनेन प्रगृह्यत्वात्स्थितोपस्थिते ॥ उकारोऽ-पृक्तो दीर्घमनुनासिकम् ॥ २९५ ॥ इतौ परे उइ-तिपदं दीर्घमनुनासिकं ऊँ इति रूपमापद्यते । इति पदं परे स्थितेऽपि । ऊँऽइत्यूँ इति सिद्धम् । अन्तरि-

ष्व्यः । सद्व्यञ्जः । कारिति कः । "अनुदात्तमित्युक्तत्वात् । कः । स्वित् । स्वरिति स्वः । स्तभितम् । पदमित्युक्तत्वात्परावयवे न । रात्रव्स्ऽइति रात्र । स्वः । आवरित्यावः । वरिति वः । "समानस्त्रीत्युक्तत्वात् । सन्तु । वः । अन्तः पक्षेषऽइत्यन्तः । क्षेषः । अत्र पूर्वभागेऽवग्रहः पदान्तवदिति स्थितं प्राप्तं "नत्विवतिकारणमित्युक्तत्वान्न भवति ॥ त्रिपदाद्यावर्त्तमाने सङ्क्रमः ॥ २८६ त्रिपदादीनां पुनरावृत्तौ सत्यां सङ्गः सङ्क्रम्यते इति सङ्क्रमः । आवृत्तानि पदान्यतिक्रम्याग्रिमपरपदं न कर्त्तव्यम् ॥ अनन्तरे ॥ २८७ ॥ शब्दतश्चार्थतश्चानन्तर्य्ये सङ्क्रमः स्यात् । शब्दतश्चानन्तर्यै गन्धर्वस्त्वा विश्वावसुरित्यत्र विश्वस्यारिष्टयै इत्याद्येकशेषारितं पुनरिन्द्रस्य बाहुरित्यादौ सङ्क्रम्यते । अर्थतो मधुश्च माधवश्चेत्यत्रोच्चारितस्य परसमुदायस्य शुक्रश्च शुचिश्चेत्यादौ सङ्क्रमः ॥ द्वित्रैकपदान्यप्यनुवाके ॥ २८८ ॥ द्विपदं एकपदं च एकस्मिन्ननुवाके पुनरावृत्तौ सङ्क्रम्यते । अत्राप्यनन्तरइति वर्त्तते तेन याऽओषधीरित्यत्रैकदोच्चारितस्य याइत्यस्य याः फलिनीरित्यत्रोच्चारणम् ॥ त्रिरावृत्ते ॥ २८९ ॥ त्रिरावर्त्तितेऽयं संङ्क्रमः स्यात् । वाजः । च । मे । प्रसवः । प्रयतिः । मा छन्दः ।

प्रमा । प्रतिमा । एकइत्यादि किम् । पवित्रम् । अ-
सि । धूः । असि । धूर्वा । निरावृत्तौ किम् । व्रतम् ।
कृणुत । व्रतम् । कृणुत । दुघे । त्वा । कर्णौ ।
त्वा ॥ गूढे ॥ ३०० ॥ द्विरावर्त्तनेऽपि सङ्क्रमः स्या-
त् । गूढं नाम द्विवारमुच्चारणीयम् । उभयाभिप्रा-
येण मध्ये एकपदं पठ्यते । यन्ताऽसि यमनः । ध्रु-
वोऽसि धरुणः । अत्र यन्ता । असि । यमनः । ध्रु-
वः । धरुणः । संहितायां द्विरावृत्तस्याप्यसीत्यस्य स-
ङ्क्रमो भवति । याः फलिनीरित्यत्र तु याः ।
च । पुष्पिणीः । अस्य याः शब्दस्य चतुर्वारमुच्चार-
णीयस्य त्रिवारमुच्चारणात् । अपुष्पा इत्यनेनापि
सम्बन्धं द्योतयितुं न संक्रमः ॥ पदसमूहे ॥ ३०१ ॥
पदानां बहुवारमुच्चारणे सङ्क्रमः स्यात् । वाजश्च
मऽइत्यध्याये च मे इतिपदद्वयस्यानुवाकान्तरेऽपि स-
ङ्क्रमः ॥ अपराङ्गे ॥ ३०२ ॥ अपरस्याङ्गे अपराङ्ग-
त्वेनैव पुनरावृत्तौ संङ्क्रमः स्यात् । स्वाहा यज्ञमि-
ति मन्त्रे स्वाहा द्यावापृथिवीभ्याᳪ स्वाहा वातादि-
त्यनयोः स्वाहाशब्दयोः सङ्क्रमः स्यात् । रमे स्वा-
हेत्यस्य न सङ्क्रमः । अपराङ्गत्वाभावात् ॥ अस्वर-
विकारे ॥ ३०३ ॥ स्वरभिन्नत्वाभावे सङ्क्रमः स्या-
त् । सुक्ष्मा चासि प्रथमस्याप्यसिशब्दस्याद्युदा-

त्त्वात् । स्त्रिया चासीत्यस्यानुदात्तत्वान्न सङ्क्रमः ॥ अलिङ्गविकारे ॥ ३०४ ॥ लिङ्गभिन्नत्वाभावे सङ्क्रमः स्यात् । महद्रो नऽइति मन्त्रे महद्रशब्दस्य भिन्नलिङ्गत्वान्न सङ्क्रमः । अग्नेर्भागोऽसीत्यनुवाके नपुंसकस्य स्पृतशब्दस्य सङ्क्रमः । व्रातः । स्पृतः । गर्भाः । स्पृताः । रश्मिः । स्पृताः । इत्येतेषु पुंल्लिङ्गत्वस्त्रीलिङ्गत्वान्न सङ्क्रमः । सत्त्वो यथाऽसीति मन्त्रे प्रथमस्य समशब्दस्य नपुंसकविषयत्वाद्द्वितीयस्य पुल्लिङ्गविषयत्वान्न सङ्क्रमः ॥ असमाने ॥ ३०५ ॥ असमाने विषये पुनरावृत्ते सङ्क्रमः स्यात् । आयुर्यज्ञेनेत्यनायुरादिर्यज्ञक्लृप्तेरसमानत्वात्सङ्क्रमः । यज्ञस्य तु यज्ञक्लृप्तेः समानविषयत्वान्न सङ्क्रमः ॥ संहितायाञ्च ॥ ३०६ ॥ चार्थः चसंहितायां पुनरावृत्तौ सङ्क्रमः स्यात् । हिरण्यगर्भऽइत्येषः । तत्प्रतूष्टेत्यादिप्रतीकपठितेषु सङ्क्रमः कार्यः । एषां मन्त्राणां ब्रह्मयज्ञादौ पठनं कार्यमिति केचित् । नेत्यपरे ॥ अवसानार्थम्पुनर्ग्रहणम् ॥ ३०७ ॥ समाप्तिद्योतनार्थं पुनरुच्चारणं स्यात् । आकूत्यै प्रयुजे इतिमन्त्रे द्वितीयादिस्वाहाकारस्य सङ्क्रमे पूष्णेऽग्नये स्वाहेत्यत्र न सङ्क्रमः ॥ अधिकारार्थम् ॥ ३०८ ॥ पदस्याधिकार्यज्ञापनार्थं च पुनरुच्चारणं स्यात् । व्याजश्चेति

मन्त्रे च मे इत्यनयोः सङ्क्रमेऽपि स्वरिति स्वः । च मे इत्यत्र रिफितत्वज्ञापनार्थं न सङ्क्रमः ॥ उपसर्गे प्रश्न ॥ ३०६ ॥ पूर्वोक्तस्य परित्यागोऽपि क्वचित्स्यात् । व्यवस्थितविषयोऽयम् । च शब्दोऽप्यर्थे । "द्विपदैकपदानीत्यनेनोक्तः सङ्क्रमः । तदेवाग्निरिति मन्त्रे न भवति ।" संहितायां चेत्यनेन विहितः सङ्क्रमः । लोकत्ताऽइन्द्रमित्यत्र न भवति । उक्तञ्च । पुनरुक्तानि लुप्यन्ते पदानीत्यादि शास्त्रतः ॥ अलोपइति यास्कस्य कात्यायनस्यार्थवशादिति ॥ अत्र सम्प्रदायानुसारेण निर्णयः ॥ इति पदलक्षणम् ॥ अथ क्रमलक्षणम् । क्रमः स्मृतिप्रयोजनः ॥ ३१० ॥ संहितायाः पदानां च स्मृतिः स्मरणं प्रयोजनमस्य सः । संहिताया अवसानर्निर्णयस्येत्यादि । एवं प्रयोजनमुक्त्वा तल्लक्षणमाह । क्रमइत्यधिकारः । अध्यायपरिसमाप्तेः ॥ द्वे पदे सन्दधात्युत्तरेणोत्तरमावसानादपृक्तवर्जम् ॥ ३११ ॥ एतदुत्तरमवसानपर्यन्तं द्वे द्वे पदे संहितया उच्चारयति स क्रमः स्यात् । इषे त्वा । त्वोर्जे । एवं पाहीति पर्यन्तं यत्र सङ्क्रमस्तत्र गलत्पदानि त्यक्त्वाऽग्रिमैः पदैः सन्धानं कर्त्तव्यम् । सङ्क्रमे सन्धिराख्याचार्यैणाभिहितत्वात् । युनक्ति सः । सकस्मै ॥ सङ्क्रमे च वैषावान् ॥ ३१२ ॥

वैश्वानरम् । नकारः स्वरे परे न यकारमापद्यते सङ्क्रमे चेत् । रक्षोहणो व इति यजुषि वैश्वानर्व । अत्र नयामि । अत्र चाकारोपधत्वात् यकारः प्राप्तः ॥ सङ्क्रमे च सर्वत्र ॥ २१३ ॥ यजुष्षु ऋक्षु च एदोद्भ्यां परोऽकारः पूर्वमापद्यते । प्राणश्च मऽइति यजुषि प्राणोऽपानः । यद्ग्रामे इति मन्त्रे शूद्रेऽर्ये । कन्याऽइवेति ऋचि यज्ञोऽसि इत्यादि भवति । अ-सङ्क्रमे किम् । उदुत्या । ऊर्जमावद । अत्र पदद्वयेन विरामः । एतद्विषयक्रमलक्षणमाह ॥ अष्टाक्षराण्यानि त्रीणि स त्रिक्रमः ॥ २१४ ॥ पूर्वस्मात्पदादष्टकं मध्ये उच्चार्य्य तदुत्तरे विरामः । एवं त्रीणि संहितया उच्चारयति स त्रिक्रमः स्यात् । उदुत्यम् । सोमेनातनच्मि ॥ पुनराकारेणोत्तरम् ॥ २१५ ॥ एवं त्रीणि पदान्युच्चार्य पुनराकारेण सहितं तृतीयपदमुच्चारणीयं स्यात् । ऊर्जमावद । आवद । वद त्वया ॥ सोषूणा भीषुणो च ॥ २१६ ॥ मो षूणः । अभीषुणः । इमौ च त्रिक्रमौ स्याताम् ॥ चत्वार्य्यष्टकापूर्वे नकारपरे सौ ॥ २१७ ॥ अष्टकापूर्वे नकारपरे सुइतिपदे सति चत्वारि संहितया उच्चारयितव्यानि स चतुष्क्रमइतिशेषः । ऊर्ध्वऽऊषुणः । एताहत्वाऽसऽऊषुणः । गोमदूषुणासत्या ॥ पुनः सुपदेनोत्तर-

म्॥ ३१८ ॥ एवं त्रीणि वा चत्वारि पदानि उच्चार्य पुनः सुपदेनान्यसुच्चारणीयं स्यात्। अभीषुणः। सुनः। नः। सखीनाम्॥ पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य॥ ३१९ ॥ उत्तरेण संहितस्यावग्रहवतः पूर्वपदस्य स्थितोपस्थितं कर्त्तव्यम्। त्वा समिद्भिः। समिद्भिरङ्गिरः। इति पूर्वमुच्चार्य। समिद्भिरिति समित्। भिः। इति पठनीयं पूर्वस्योत्तरसंहितस्येत्य"वसाने चेति" यावदनुवर्त्तते॥ [illegible]:पदद्दीर्घीभावे॥ मामहन्तामदितिः। ममहन्तामिति ममहन्ताम्। आयुर्नगिन्द्रः। अयुनगित्ययुनक्॥ विनामे॥ ३२०॥ सुषाव। सोमम्। सुसावेति सुसाव॥ प्रगृह्ये॥ ३२१॥ इन्द्रवायूऽइमे। इन्द्रवायूऽइतीन्द्र। वायू। मित्रावेते। मित्रावेऽइति। वरुणम्। ओँऽइत्यं। ओपशः। ओऽइति ओ। सुनः। कद्धीँऽकायुसुः। ओँऽइत्यं। सुनः॥ रिफिते ऽनिवक्ते॥ ३२२॥ अन्तस्थे। अन्तरित्यन्तः। प्रातः सोमम्। प्रातरिति प्रातः॥ अनसाने च॥ ३२३॥ अर्द्धर्चादिः समाप्तौ विद्यमानस्य स्थितोपस्थितं स्यात्। पशून्पाहि। पाहीति पाहि। हव्यर्ठं रक्ष। रक्षेति रक्ष॥ भुवनमाविवेशा ३। आविवेशा ३॥ विवेशा ३इति विवेशा३। अत्र "प्लुतमिता"विति प्रकृतिभावः॥ यथा समाम्नातक्रमावसान-

ठँ० सङ्क्रमेषु ॥ ३२४ ॥ सङ्क्रमेषु पूर्वोक्तेषु यथासमाम्नातं क्रमशाख्यानुसारेणावसानं स्यात् । विष्टम्भधाः परमेण । कार्षीच्छतधारम् । अत्र नावसानम् । ध्रुवेण धर्म्मणा । धर्मणेति धर्म्मणा । अंशाँर ॥ ऽअनु । अन्वित्यनु । अत्रावसानं भवति । सङ्क्रमेष्वित्युपलक्षणम् । अन्यत्रापि यथासमाम्नातमेव । अधुक्षः सा, सा ... स्थायुः । विष्टम्भधायाऽइन्द्रस्य । अत्र नावसानम् । हव्यर्ठँ० रक्ष । रक्षेति रक्ष । यच्छन्ताम्पञ्च । पञ्चेति पञ्च । अत्रावसानम् । असन्देहार्थं प्रसङ्गात्क्रमसन्धानानि प्रदर्श्यन्ते । विष्टम्भधाः परमेण । कार्षीच्छतधारम् । सहस्रधारन्द्रेवः । अधुक्षः सा । विष्टम्भधायाऽइन्द्रस्य । राद्ध्यतामिदम् । एमिकः । तस्मै कर्म्मणे । वामरत्युष्टम् । अरातयऽउरु । एमि भूः । भूर्व्योमो देवानाम् । देवकृतममहुतम् । हविर्ध्दानँ विष्णुः । हस्ताभ्यामग्नये । गृह्णामि भूताय । रक्षोभिर्द्देवी: । देवयुवँय्युष्मा: । स्याग्नये । अग्नीषोमाभ्यान्दैव्याय । वेत्त्वहिः । वेत्त्वग्निः । प्राशीत्र्व हविष्कृत् । इहि कुक्कुटः । वह दृंहवम् । वधायाग्ने । अन्तरिक्षन्धरत्वम् । दिवँव्विष्णुभ्यः । वेत्तु धान्यम् । ज्यानाय दीर्घाम् । रसेन रेवतीः । पृच्यन्ताञ्जनयत्यै । वध: पृथिवि । सौगप । व्याद्या-

समरी । स्कन्नगायत्रेण । जागतेन सुम्ना । मा-
ऽउर्म्यं निधिता । माऽउर्म्यं दिश्यै । पशुभ्यामभ्यग्ने: । यु-
जुषे यजुषे सवितुः । त्वा तेजः ॥ ४२ ॥ इति द्विचत्वा-
रिंशत्क्रमसन्धानानि प्रथमाध्याये ॥ १ ॥ पतये गन्ध-
र्व्वः । इडितऽइन्द्रस्य । दक्षिणो मित्रावरुणौ । अ-
भिभूत्यै सवितुः । ध्रुवा ध्रुवा । माञ्जिर्म नमः । स-
पत्नामस्माकम् । यपन्नाभ्येतम् । ब्रह्मणा तेन । जु-
ह्वाभ्यग्नीषोमौ । जहामीन्द्राऽग्न्योरिन्द्राग्नी । इ-
न्द्राग्नी व्वसुभ्यः । अवताँव्यन्तु । मरुद्भिरिन्द्रः ।
तस्मै पोषाय । व्वर्त्तेग्ने । हिमाऽअचारिषम् । व्वे-
दिषदो ये ॥ १९ ॥ इत्येकोनविंशतिर्द्वितीयाध्या-
ये ॥ २ ॥ उषसा सूर्य्यः । गृहपते पुरीष्यः । पति-
वेदनमितः ॥ ३ ॥ इतित्रीणि तृतीये ॥ ३ ॥ चतुर्थे क्र-
मसन्धानाभावः ॥ ४ ॥ पुरूरवा मन्थामि । रजःश-
या हरिशया । देववीतये सिठं०हि । ध्रुवो व्वैष्णव-
म् । ध्रुवऽऐन्द्रम् । हव्यवाहनः श्वात्रः ॥ अभूद्दय-
थायथम् ॥ इतिसप्त पञ्चमे ॥ ५ ॥ षष्ठे न सन्ति ॥ मादय-
स्वोदानाय । भूर्म्महेन्द्राय । इति द्वे सप्तमे । ७ ।
अष्टमे क्रमसन्धानाभावः ॥ इन्द्रस्य सत्यप्रसवः ।इन्द्रं-
व्वाजजितः । इति द्वे नवमे ॥ ९ ॥ दशमे क्रमसन्धा-
नाभावः ॥ १० ॥ जागतेन हस्ते । हिरण्ययीमानुष्टु

भेन । इति द्वे एकादशे ॥ ११ ॥ परिचिल्लोकम् । १ । इत्येकं द्वादशे ॥ १२ ॥ दिशामि साहस्रम् । गयग्रमूल्लायुम् । उष्टमजः । प्रश्नन्वम् । इति चत्वारि त्रयोदशे ॥ अन्तरिक्षँ्वायुः ॥ वायू राज्ञी । बृहती नभः । इति त्रीणि चतुर्द्दशे ॥ १४ ॥ अग्ने-र्देवः । रथेचित्रो मेनका । असमरथः प्रम्लोचन्ती । अरिष्टनेमिर्व्विश्वाची । सुषेणाऽउर्व्वशी । शैशिरौ परमेष्ठी । दिवः सूर्य्यः । दिवन्ध्रुवे । इत्यष्टौ पञ्चदशे । १५ । षोडशसप्तदशयोर्न्न सन्ति ॥ १६ । १७ स्वतोमः । रथन्तरँ्वेट् । १८ । इति द्वे अष्टादशे । १९ । एकोनविंशतिमेऽभावः । २० । व्वायुज्जीग्मत् । स्वाङ्गे सूर्य्यः । शुद्धेऽर्य्ये । प्राणोऽयन्नि । इति चत्वारि विंशतिमे । २१ । एकविंशतिमेऽभावः ॥ २१ ॥ प्राणाय स्वं । इति द्वे द्वाविंशे । २२ । चतुष्पदश्चन्द्रमाः । चन्द्रमा राज्ञौ । व्वायुः सूर्य्यः । इति त्रीणि त्रयोविंशे । २३ । चतुर्व्विंशतिपञ्चविंशतिषड्विंशतिसप्तविंशत्यध्यायेषु क्रमसन्धानाभावः । २४ । २५ । २६ । २७ ॥ शुचिर्मुत्स्वाहा । देवौ त्रिष्टुभा । इति द्वे अष्टाविंशे । २८ ॥ ऊनत्रिंशत्त्रिंशदेकत्रिंशद्द्वात्रिंशत्त्रयस्त्रिंशच्चतुस्त्रिंशत्पञ्चत्रिंशत्स्वध्यायेषु क्रमसन्धानाभावः । २९ । ३० ।

। ३१ । ३२ । ३३ । ३४ । ३५ ॥ ऊतिभिः कया । ईडामहे । इति द्वे षट्त्रिंशे । ३६ । पाहि मधु । स्वाहा रात्रिः । इति द्वे सप्तत्रिंशे ॥ ३७ । सरस्वत्यसौ । इत्येकमष्टत्रिंशे । ३८ । एकोनचत्वारिंशे क्रमसन्धानाभावः । ३९ । अविद्वाँ॒विद्वाम् । ओम् २ क्रतो । स्मर क्लिबे । क्लिबे कृतम् ॥ ४० ॥ इति चत्वारि चत्वारिंशे । ४० । इति पञ्चदशाधिकैकशतं क्रमसन्धानानि । ११५ । एभ्योऽन्यत्र संहितावसानानुसारेण पाराशरीयचरणानुसारेण च निर्णयः कर्त्तव्यः । इति क्रमसन्धानानि समाप्तानि ॥ अथोष्मकारोपरितनरेफोच्चारणविषयो व्याख्यायते । उक्तं च प्रतिज्ञासूत्रे । अथापरान्तस्थस्यायुक्तान्यहलःसंयुक्तोष्मकारैरेकारसहितोच्चारणमेवं तृतीयान्तस्थस्य क्वचित् । अस्यार्थः । अपरान्तस्थस्य रेफस्य अन्यहला असंयुक्तस्य ऊष्मभिःकारेण संयुक्तस्य एकारसहितं रे इत्युच्चारणं कर्त्तव्यमिति शेषः । उदाहरणम् । दर्शतमित्यत्र दरेशतमित्ययं पाठो न रेफसहितः । एवमन्यत्र । वर्षो वर्षीयसि । वर्हिः । निऋते । सकारोदाहरणे षकारोदाहरणमेव भवति । अयुक्तान्यहलइति किम् । वर्ष्याय । १ अत्र माभूत् । संयुक्तस्येति किम् । ऊर्ज्जेत्त्वा । एवं संयुक्ता-

संयुक्तस्थले तृतीयाक्षरस्थस्य जकारस्य क्वचिल्लक्ष्यानुरोधेन पूर्वोक्तमेकारसहितोच्चारणं कर्त्तव्यम् । क्वचिदित्युदाहरणानि लल्पप्रमितिग्योत्स्नाकारः । यथा शतवल्शाइत्यत्र वल्शेभ्राद्युच्चारः । सहस्रवल्शाः । उपवल्हामसि । अत्रास्मिन्सूत्रे ऊष्मऋकारोपरितनरेफस्य प्राक् एकारसहितोच्चारणं कर्त्तव्यमित्युक्तम् । तथा च प्रतिज्ञासूत्रभाष्ये अनन्तयाज्ञिकैर्माध्यंदिनशिक्षाया वचनं गृहीतम् ॥ तदेवाह । शषसहा यत्र दृश्यन्ते रेफेणाक्रान्तमस्तकाः ॥ स्वरभक्तिं प्रयुञ्जीत संयोगे नैव कारयेत् । १ । अत्रोष्मणामेव ग्रहणं न ऋकारग्रहणम् । तथा च प्रातिशाख्ये । रलाहृलृवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र । अस्यार्थः । रेफलकारौ ऋलृवर्णाभ्यां ऋलृसदृशश्रुतिभ्यां यथासंख्यं व्यवधीयेते । ऊष्मणि परभूते स्वरोदये स्वरपरे इत्यर्थः । सर्वत्र संहितायां पदे च । गार्हपत्यः । अत्र हकाररेफयोरन्तरापि स्वरभक्तिः सती रेफहकारयोः संयोगं न विहन्ति । एवमन्यत्रापि द्रष्टव्यम् । शतवल्शः । वल्हामसि । स्वरोदयइति किम् । अर्द्धवर्स्वैः । पार्श्वतः । दिवो वर्षन् । अभ्युभिर्ह्लादुनीः । अत्रापि ऋकारान्तग्रहणं नास्ति । केवलोष्मणामेव ग्रहणम् । तथा च नवाङ्कसूत्रे । अह-

एमल्यूर्ध्वरेफस्य सैकारः प्राक्च । अस्यार्थः । पदाद्यन्तमध्ये हलिवहीनस्य शलि ऊर्ध्वरेफस्य सैकारः प्रागुच्चारः स्याच्छन्दसि । शलिति शषसहा ज्ञेयाः । दर्शतमिति नतु सोर्ध्वरेफोच्चारः । व्हार्षीत । षकारस्योदाहरणमेव सकारस्य कथं इणकवर्गाभ्यां परस्य सस्य मूर्द्धन्यइति कृत्वा रेफस्त्विणमध्ये वर्त्तते तर्हि रेफात्परो यः सकारः स मूर्द्धन्य इति कृत्वोभयोरेकमेवोदाहरणम् । बर्हिषे त्वा । शतवल्शेत्यत्र वल्शेत्युच्चारः । एवमन्यत्रापि । ऋलृवर्णयोर्मिथः सावर्ण्याल्लकारस्यापि प्राक्सैकारोच्चारः । न तु संयुक्तोच्चारः । अहलिति किम् । यज्ञपतिव्हार्षीत् । शलीति किम् । ऊर्ज्जे त्वा । अत्रापि ऋकारग्रहणाभावः । एतदर्थे केशवीशिक्षायाम् । विहलग्ल्यूर्ध्वरेफो यः सैकारः प्राक्समुच्चरेत् । अत्रापि ऊष्मणामेव ग्रहणमस्ति । तथा च लघुमाध्यन्दिनीयशिक्षायाम् । रेफो रेकारमाप्नोति शषहेषु परेषु च ॥ ददर्श वर्षौ अर्हाच्च सँय्योगं नैव कारयेत् । १ । वर्ष्यन्वर्ष्यायान्नर्हदा चात्रेयं प्रत्युदाहृतिः । लकारोऽपि च सावर्ण्याद्रेकारसहितो भवेत् । २ । शतवल्शा वल्हामसि तत्र तावदुदाहृतिः । अत्रापि ऋकारग्रहणं नास्ति । तथा च याज्ञवल्क्य-

या: ॥ स्वरभक्तिरसौ ज्ञेया पूर्व्वमाक्रम्य पठ्यते । ३ । स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान्परिवर्जयेत् । इकारं चाप्युकारं च ग्रस्तदोषं तथैव च । ४ । उभयोर्मध्ये हि एकार: सैव स्वरभक्ति: । अत्रापि ऋकारग्रहणाभाव: । अमरीशिक्षाऽप्येतदर्थे । रकारोऽथ लकारो वा यत्रोष्मणि स्वरोदये ॥ स्वरभक्तिर्भवेत्तत्र पूर्व्वमाक्रम्य पठ्यते ॥ ५ ॥ ऊष्मणां स्वरभक्तिस्तु द्विर्भावं बाधते यथा । वर्षो वर्षीयसि ब्हार्भिश्छतवल्शोऽपि सिध्यति । ६ । ऊष्मणास्तुपरिष्टस्तु रेफो याति रेवर्णताम् । रेफत्वं पुनरायाति यदूष्माणोऽन्यसँय्युता: । ७ । अत्रापि ऋकारग्रहणाभाव: । अत्र सिद्धान्त: । रेकारोच्चारणे भगवता कात्यायनेन प्रातिशाख्यसूत्रे ऊष्मणामेव ग्रहणं कृतम् । तथा च याज्ञवल्क्यमाध्यन्दिनादय: शिक्षाकर्त्तार ऊष्मणामेव ग्रहणं कुर्व्वन्ति । एकस्मिन्नेव प्रतिज्ञासूत्रे ऋकारोष्मणां ग्रहणमस्ति । अतो वैदिका विकल्प इत्याहु: । तथा च कात्यायनेन प्रातिशाख्यसूत्रेऽप्याहृतं याज्ञवल्क्यमाध्यन्दिनादिभि: शिक्षासु च गृहीतं अनादिसम्प्रदायागतं यन्मतं तत्सर्व्वैर्वैदिकैर्ग्राह्यमिति स्पष्टं प्रतिभातीत्यलमतिप्रसङ्गेन । अत्र ऋकारोच्चारणे विशेष: । तथा च प्रतिज्ञासूत्रे "ऋकारस्य तु सँय्युक्तासँय्युक्तस्याविशेषेण

सर्व्वत्रैवम्" । अस्यार्थः । पदान्तमध्येषु सँय्युक्तासँयुक्तस्य ऋवर्णस्य रेकारः स्यात् । सर्वत्र संहितायां पदेच । यथा कृष्णोऽसीत्यत्र क्रेष्णोसीत्युच्चारः । ऋत्विधो यतः । अत्र रेत्विय इत्युच्चारः । एवं "ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यमिति" वार्त्तिकेन लृकारस्यापि ले इत्युच्चारः । क्लृप्तमित्यत्र क्लेप्तमित्युच्चारः । एतदर्थे केशवीशिक्षा । ऋकारश्चलियुग्युक्च रेकारश्छन्दसि स्मृतः । इति ऋकारोच्चारणे विशेषः ॥ अथ जकारोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे । "अथान्तस्थानामाद्यस्य पदादिस्थस्यान्यहलसंय्युक्तासँव्युक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण च विशेषणादिमध्यावसानेषूच्चारणे जकारोच्चारणं द्विर्भावेऽप्येवम्" ॥ अस्यार्थः । अन्तस्थानामाद्यस्य यकारस्य पदादौ विद्यमानस्य अन्यहला अन्यव्यञ्जनेन असंयुक्तस्योच्चारणे जकारोच्चारणं स्यात् । रेफऊष्मणामन्त्यो हकारस्य आभ्यां युक्तस्यापि अविशेषेणादिमध्यावसानेषु पदस्य जकारोच्चारणं स्यात् । ऋकारेण युक्तस्य अविशेषेण अन्यहला सँयुक्तस्य असंय्युक्तस्य वा आदिमध्यान्तेषु जकारोच्चारणम् । क्रमेणोदाहरणानि । यन्ते । युञ्जते । घृताचीर्य्यन्तु हर्य्यत ।सूर्य्यः । कण्ह्यद्ध्वरम् । प्रबाह्याय । सदोऽस्यृतस्य । व्यृद्धै । पदादि-

स्थस्येति किम् । अयजन्त । अन्यहलीत्यादि किम् । अस्मिन्न्यज्ञे । एवं पदादिमध्यान्तेषु यकारद्विर्भावे द्वित्वे सति ज्ञेयमनृपाय्यम् । धाय्यारूपम् । तँ य्यज्ञम् । जरायुस्थ्वसि । अत्र स्वरात्संय्योगादिरिति द्वित्वम् । तथा च याज्ञवल्क्यः । पादादौ च पदादौ च संय्योगावग्रहेषु च ॥ जः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ युक्तेन मनसा तद्वत्त्वा यामि तथा परम् ॥ अनूकाशेन बाह्यश्च योगे योगे निदर्शनम् ॥ उपसर्गपरो यस्तु पदादिरपि दृश्यते ॥ ईषत्स्पृष्टो यथा वियत्पदच्छेदात्परं भवेत् ॥ तथा च कात्यायनशिक्षायाम् । आद्यान्तस्थस्य जोच्चारः पदादौ पठितस्य च ॥ उपसर्गपरो यस्तु तस्य छन्दसि नेष्यते ॥ पदस्याद्यन्तमध्ये स्याद्दर्हैः संय्युतस्य च ॥ द्विर्भावेऽप्येवमेव स्यादिति कात्यायनश्रुतिः ॥ उपसर्गात्परस्य न जकारोच्चारणम् । यथा अभियज्ञम् । द्विर्भावेऽयन्निषेधो न । संय्यौमि । अतएव नवाङ्कसूत्रे केशवेन सम्पूर्वयोस्त्युक्तम् । यज्ञञ्च मानुषाणां तथा च योजान्विन्द्र, इत्यत्र पादादिस्थत्वात् । उपसर्गात्परत्वेऽपि जकारोच्चारः । उप यज्ञꣳ हविरित्यत्र पादादिस्थत्वाभावाद्यकारत्वमेव । पदादित्वेन सिद्धे पादादौ पुनर्ज्जकारोच्चारणाविधानम् । पादादौ च पदादौ चेति याज्ञवल्क्योक्तेः ॥ अतो

ज्योत्स्नाकृता स्तुतीरूप इउज्ञमेव गृहीतम् । अतएव वामदेवीशिक्षायाम् । अनुयोजान्विन्द्र ते तु उपय्उज्ञं विना तथा ॥ अथो पूर्वकस्य न । उक्तं च । अथ मासनशब्देभ्यो विभाषाऽऽम्रेडिते यवौ । यथा । अथो ये । मा यज्ञम् । स योजते । मनो न येषु अत्र यकारोच्चारणे विकल्पः ॥ विकल्पविषये सम्प्रदायएव शरणम् । इति जकारोच्चारणविषयः । अथ वकारोच्चारणविषयः । तथा च प्रतिज्ञासूत्रे । अथान्त्यस्थान्तस्थानां पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणम् । अन्तस्थानामन्त्यस्य वकारस्य अपदादौ मध्ये अन्ते च विद्यमानस्य यथाक्रमं गुरुमध्यमलघुवृत्त्या चोच्चारणम् । यथा । वायवः । वायव्यतस्पते । तथा च याज्ञवल्क्यः । वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ॥ आदौ गुरुर्लघुर्मध्ये पदान्ते तु लघूतरः ॥ सन्धिजौ तु पदान्तीयावुपसर्गपरौ लघु ॥ अथ मासनशब्देभ्यो विभाषाऽऽम्रेडिते यवौ । ये ये पदादिस्थयकारविषये निषेधास्ते वकारेऽपि ॥ यथा वयम् । तथा च माध्यन्दिनशिक्षायाम् । गुरुर्वकारो विज्ञेयः पदादौ पठितो भवेत् । वित्वमाडुदाहृतिर्ज्ञेया सविताऽन्तर्लघुस्स्मृतः । पदान्ते वै लघुतरस्तव वायव्यतस्पते । उपसर्गपरो यस्तु स वकारो

लघुर्मतः। वो वां वा वै मन्त्रपाठे लघवो गुरवः पदे॥ तथा चामोघनन्दिन्यमरेशशिक्षयोः। त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ॥ आदेशाश्च विकल्पार्थाः ईषत्स्पृष्टा इति स्मृताः। देवो वः सविता या वाँ व्वातो वेति तथा न वै॥ अत्रापि सम्पूर्वकस्य वकारस्य द्वित्वमेव। यथा सँव्वाम्॥ इति वकारोच्चारणविषयः॥ अथ षकारोच्चारणविषयः। तथा च प्रतिज्ञासूत्रे। अथो मूर्द्धन्योष्मणोऽसँय्युतस्य टुत्ते सँय्युक्तस्य च खकारोच्चारणम्। अथान्तस्थकथनानन्तरं मूर्द्धस्थानस्योष्मणः षकारस्य असँय्युक्तस्य टवर्गं विना अन्यहला संयुक्तस्य च खकारोच्चारणम्। इषे त्वा। व्विभष्य॑स्त्वे। शुष्क्याय। टुत्ते किम्। प्रत्युष्टम्। श्रेष्ठतमाय। कृष्णः। क्षकारे षकारवत्। अवयवसम्भावनेऽपि मातृकादौ गणनात्। एकवर्णत्वात्। अवयविभागाभावेन खकारोच्चारणम्भवति। ककारयोगे खकारोच्चारणाभावइति नियमस्तु न शुष्कमित्यादौ विपरीतसँय्योगे ककारयोगेऽपि खकारोच्चारणं भवति। तथा च कात्यायनशिक्षायाम्। असँय्युतस्य मूर्द्धन्योष्मणः खोच्चारणम्मतम्॥ टुत्ते सँय्युक्तस्यापि कस्य योगे ष एव हि॥ छन्दसीत्येव खोच्चारो लोके प्रकृतिरिष्यते॥ इति षकारोच्चारणविषयः। इमे सर्वे

नियमा ब्रह्मयज्ञादौ अर्थविचारे तु प्रकृत्या ये वर्णा-
स्त एव न त्वर्थभेदः ॥ परसवर्णोपत्यप्रकृत्या चान्यत्र ।
शषसहेभ्योऽन्यत्र तु मकारस्य परपञ्चमविधानात्स्य-
ष्टमुच्चारणे प्राप्ते परस्य वर्णस्य सवर्णो यः पञ्चम-
स्तस्येपत्साहश्येनोच्चारणं स्यात् । तञ्ज्ञानम् । इत्यादौ
वाजाञ्जयतु इत्यादिवत् अकारादेर्न स्पष्टमुच्चारणम् ।
विसर्गेष्वीषद्विरामः ॥ विसर्गेषु नान्तरीयकार्द्धमात्रा-
कालापेक्षया किञ्चिदधिककालो विरामः । अवसानं
कृत्वाऽग्रिमवर्णोच्चारणं कार्यम् । व्सोः पवित्रम् ।
याः फलिनीः ॥ पदादास्य संयुक्ताकारस्येषद्दीर्घता
च भवति ॥ परस्यादिभूतस्य हल्संयुक्तस्य अकारस्य
ह्रस्वस्येषद्दीर्घता च एकमात्राकालापेक्षया किञ्चि-
दधिककालोच्चारणं स्यात् । व्सोः पवित्रम् । पदा-
दिस्थस्येति किम् । व्वायवः । हल्संयुक्तस्य किम् ।
अनुनः । अकारस्येति किम् । ध्रुवाः ॥ अथ जटा-
द्यष्टविकृतीनां लक्षणान्युच्यन्ते । तत्र विकृतीनां पा-
ठे फलं पङ्क्तिपावनत्वम् । जटादिविकृतीनां ये पा-
रायणपरायणाः ॥ महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः प-
ङ्क्तिपावना इत्यादित्यपुराणात् । अन्यान्यपि वि-
ष्णुलोकानि फलानि वाराहपुराणपाराशरस्मृत्यादि-
षु । तासान्नामानि प्रदर्श्यन्ते । जटा माला शिखा रे-

खा ध्वजो दण्डो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः । तत्र प्रथमत्वाज्जटालक्षणम् । क्रमं यथोक्तं प्रब्रूयाद्व्युत्क्रमेण क्रमेण च ॥ सकृद्दृशां सर्वसन्धौ जटा सा प्रोच्यते बुधैः ॥ अस्यार्थः । क्रमं यथोक्तं द्वित्रिचतुष्क्रमात्मकं पुनश्च तमेव वैपरीत्येन पुनश्च क्रमेण एवं त्रिवारं सर्वसन्धिषु लक्षणयुक्तं पठेत्सा जटेति तत्त्वज्ञैरुच्यते । वायवस्थ स्थ वायवो वायवस्थ । इत्यादि । अथ जटायां पठ्यमानान्क्रमान्नामतो निर्दिशति । अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा ॥ सङ्क्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः ॥ वायवस्थ । इत्यनुक्रमः । स्थस्थ । इत्युत्क्रमः । स्थवायवः । इतिव्युत्क्रमः । वायवो वायवः । इत्यभिक्रमः । इमे पञ्चक्रमा एव पृथक्पृथक् पठनेन पञ्चसन्धिरिति वैदिकैः पठ्यते ॥ स्वापूर्वांशं पदद्वन्द्वं स्वागर्भे त्रिचतुष्क्रमे ॥ पुनरुक्तमसन्देहार्थं जटात्वं न चार्हति ॥ सुआ इति पदद्वयगर्भे त्रिक्रमे सोमपूणः सोमेनानच्मि इत्यादौ तथा चतुष्क्रमे गोमदूषुणा सत्या इत्यादौ सुआ पूर्वांशं पदद्वयं असन्देहार्थं द्विपदत्वभ्रमवारणाय सुनः आतनच्मि । इति पुनरुच्चारितं जटाभावं नार्हति । असन्देहार्थमिति हेतुगर्भं विशेषणम् । यथा उद्गुत्यमित्यादौ द्विपदत्वभ्रमवार-

णाय ऊँइत्यूँ । इति मध्यस्थस्य वेष्टनम् । तथा इदं न तु क्रमः । अतो जटा न कार्या ॥ अथ माला सा द्विविधा पुष्पमाला क्रममाला च । पुष्पमाला लक्षणमाह । मालामालेव पुष्पाणां पदानां ग्रन्थिनी हि सा ॥ आवर्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसङ्क्रमाः ॥ सुसमिद्धाय शोचिषे । शोचिषे सुसमिद्धाय । इत्यादि । अथ क्रममाला । ब्रूयात्क्रमविपर्यासावर्द्धर्चस्यादितोऽन्ततः ॥ अन्तं चादिं नयेदेवं क्रममालेति गीयते ॥ अर्द्धर्चस्यादितः क्रमं अंततो विपर्यासं क्रमेण पठेत् । अनेन प्रकारेण क्रममन्तं नयेत् । विपर्यासमादिं प्रापयेत्सा क्रममालेति ऋषिभिरुच्यते । त्रिᳯंशद्धाम । धीयतऽइति धीयते । धाम व्वि । धीयते पतङ्गाय । व्विराजति । पतङ्गाय व्वाक् । राजति व्वाक् । व्वाग्राजति । व्वाक्पतङ्गाय । राजति व्वि । पतङ्गाय धीयते । व्विधाम । धीयतऽइति धीयते । धाम त्रिᳯंशत् । इत्यादि । अथ शिखा । पदोत्तरां जटामेव शिखामार्याः प्रचक्षते ॥ पूर्वोक्तां जटामेव अन्ते एकपदाधिकां शिखां विकृतिं मुनय आहुः । अन्तश्चरति चरत्यन्तरन्तश्चरति रोचना । इत्यादि ॥ अथ रेखा । क्रमाद्द्वित्रिचतुष्पञ्चपदक्रममुदाहरेत् ॥ पृथक्पृथग्विपर्यस्य रेखामाहुः पुनः क्रमात् ॥ क्रमेण द्विपदत्रिपद-

चतुष्पदपञ्चपदक्रमानुक्त्वा प्रतिक्रमे पृथक्पृथक् विपर्यासेन पठित्वा पुनः क्रमं पठेत्तां विकृतिं रेखामाहुः । व्विद्वद्वाते । तेव्विद्वद्ध । विद्वद्वाते । तेऽअग्ने चेधा । चेधाग्ने ते । तेऽअग्ने । अग्ने चेधा । चेधा चयाणि व्विद्वद्धा ते । ते विद्वद्ध चेधा चयाणि । चयाणि विद्वद्ध । विद्वद्वाते । ते धाम विभृता पुरुत्रा । पुरुत्रा व्विभृता धाम ते । ते धाम । धाम व्विभृता । विभृता पुरुत्रा । विभृतेति वि । भृता । पुरुत्रेति पुरु । त्रा । विद्वाते । ते विद्वद्ध । विद्वद्वाते । ते नाम परम् । परमन्नाम ते । ते नाम । नाम परमम् । परमङ्गुहा यद्विद्वद्ध । विद्वद्ध यद्गुहा परमम् । परमङ्गुहा । गुहा यत् । यद्विद्वद्ध । विद्वद्धा तमुत्सँव्यतऽआजगन्थ । आजगन्थ यतऽउत्सन्तं विद्वद्ध । विद्वद्धातम् । तमुत्सम् । उत्सँव्यतः । यतऽआजगन्थ आजगन्थेत्या । जगन्थ ॥ अथ ध्वजः । ब्रूयादादेः क्रमं सम्यगन्तादुच्चारयेदिति ॥ वर्गे वा ऋचि वा यस्य पठनं स ध्वजः स्मृतः ॥ वर्गे ऋचि वा आदेः क्रमं अन्तपर्य्यन्तं ब्रूयात् । अन्तात्सम्यग्यथोक्तं क्रममेवोच्चारयेत् । आदिपर्यन्तं पठेत् एवं यस्य पठनं स ध्वजनामा विकृतिः । विष्णोः कर्माणि । सखेति सखा । कर्माणि पश्यत । युज्यः सखा । पश्यत यतः । इन्द्र-

स्य युज्य. । यतो व्रतानि । पस्पशऽइति पस्पशे । व्रतानि पस्पशे । व्रतानि पस्पशे । पस्पशऽइति पस्पशे । यतो व्रतानि । इन्द्रस्य युज्यः । पश्यत यतः । युज्यः सखा । कर्म्माणि पश्यत । सखेति सखा । विष्णोः कर्म्माणि ॥ अथ दण्डः । क्रममुक्त्वा विपर्य्यस्य पुनश्च क्रममुत्तरम् ॥ अर्द्धर्चा-देवमुक्तोऽयं क्रमदण्डोऽभिधीयते ॥ क्रममुक्त्वा अर्द्ध-र्चात् । अर्द्धर्चादिपर्यन्तं पुनः पुनर्विपर्यस्य पुनः क्रमं अर्द्धर्च्चसमाप्तिपर्य्यन्तं पठेत् एवमुक्तो विकृति-विशेषो दण्ड इत्युच्यते ॥ यजानः । नो यज । यजा-नः । नो मित्रावरुणा । मित्रावरुणा नो यज । यजा-नः । नो मित्रा वरुणा । मित्रावरुणा नो यज । यजा-नः । नो मित्रावरुणा । मित्रावरुणा यज । रज । मित्रावरुणा नो यज । यजानः । नो मित्रावरुणा यज । यजा देवान् । अनेन प्रकारेण अर्द्धर्चसमाप्ति-पर्य्यन्तं पठेत् ॥ अथ रथः ॥ समे ऋचौ गृहीत्वा च रथवच्चलति क्रमः ॥ पादशोऽर्द्धर्च्चशो वाऽपि सहोक्त्या दण्डवद्रथः ॥ ऋचि अर्द्धर्चि पादे वा क्रम-विपर्यासौ दण्डवत्सहोक्तौ चेत्स विकृतिविशेषो रथ इ-त्युच्यते । धानानाᳪ रूपम् । सक्तूनाᳪ रूपम् । रूपन्धाना-नाम । रूपᳪ सक्तूनाम । धानानाᳪ रूपम । सक्तूनाᳪ-

रूपम् । रूपङ्कुवलम् । रूपम्बदरम् । कुवलर्ठ० रूपन्धा-
नानाम् । बदरर्ठ० रूपर्ठ० सक्तूनाम् । धानानाᳫं रूपम् ।
सक्तूनाᳫं रूपम् । रूपं कुवलम् । रूपम्बदरम् । कुवल-
म्परीवापस्य । बदरमुपवाकाः । परिवापस्य कुवलर्ठ०
सक्तूनाम् । धानाᳫं रूपम् । सक्तूनाᳫं रूपम् । रूपङ्कुव-
लम् । रूपम्बदरम् । कुवलं परीवापस्य । बदरमुपवा-
काः करम्भस्य । गोधूमाः परिवापस्य कुवलर्ठ० रूप-
न्धानानाम् । करम्भस्योपवाका बदरर्ठ० रूपर्ठ० सक्तूना-
म् । धानानाᳫं रूपम् । सक्तूनाᳫं रूपम् । रूपं कुवलम्
रूपम्बदरम् । कुवलं परीवापस्य । बदरमुपवाकाः ।
परीवापस्य गोधूमाः । उपवाकाः करम्भस्य । परिवाप-
स्येति परि । वापस्य । उपवाका इत्युप । वाकाः । गो
धूमा इति गोधूमाः । करम्भस्येति करम्भस्य । ज्यो-
त्स्नायां प्रकारान्तरेण यथोक्तः स तत्रैव द्रष्टव्यः । अथ घ-
नः स द्विविधः । अन्तात्क्रमं पठेत्पूर्वमादिपर्यन्तमानये-
त् ॥ आदिक्रमन्नयेदन्तं घनमाहुर्मनीषिणः ॥ अ-
तिथिमित्यतिथिम् । बोधयतातिथिम् । घृतैर्बोधयत ।
दुवस्यत घृतैः । अग्निन्दुवस्यत । समिधाग्निम् । स-
मिधेति सम् । इधा । अग्निन्दुवस्यत । दुवस्यत घृ-
तैः ॥ घृतैर्बोधयत । बोधयतातिथिम् । अतिथिमि-
त्यतिथिम् । इत्यादि ॥ अथ द्वितीयः । शिखालक्षणा

विपर्य्यस्य तत्पदानि पुनः पठेत् ॥ अयं घनइति प्रोक्त इत्यष्टौ विकृतीः पठेत् ॥ शिखां पूर्वोक्तामुच्चार्य्य विपर्यासेन तानि पदान्युच्चार्य पुनः क्रमेण तानि पदान्युच्चारयेत् । अयं घनइत्यृषिभिः प्रोक्तः । दस्रा युवाकवो युवाकवो दस्रा दस्रा युवाकवः सुताः सुता युवाकवो दस्रा दस्रा युवाकवः सुताः । इत्यादि । शेषं ज्योत्स्नादिषु ज्ञेयम् ॥ शाके दृग्भ्राष्टभूमिते शुभे विक्रमवत्सरे ॥ माघे मासि सिते पक्षे प्रतिपद्भानुवासरे ॥ १ ॥ प्रातिशाख्यप्रदीपाख्या शिक्षेयं रचिता शुभा ॥ गोडशे इत्युपाह्वेन बालकृष्णेन धीमता ॥ २ ॥ श्रीसदाशिवपौत्रेण श्रीप्रभाकरशर्म्मणा ॥ कृपया मह्यमादत्ता मुद्रायन्त्रे प्रकाशिता ॥ ३ ॥ युगलशाङ्किशोरेण पाठकेनानुजेन च॥विश्वेश्वरस्य पुत्रेण श्रीव्यासोपाधिधारिणा ४ ॥ सरयूपारिणा सच्छ्वेदविद्यालयस्य च ॥ अध्यापकेन छात्राणां शीघ्रं सम्बोधनायच ॥ ५ ॥ शिक्षासङ्ग्रहमध्ये तु ह्येतस्याः सङ्ग्रहः कृतः ॥ एतदग्रे तु वेदस्य श्रीमाध्यन्दिनशाखिनः ॥ ६ ॥ परिभाषाख्यसूत्रं तु श्रीमद्रामस्य निर्मितम् ॥ तदग्रे सूत्रशेषस्य कारिका सुप्रकाशिका ॥ ७ ॥ अथ वेदपरिभाषासूत्रशिक्षां व्याख्यास्यामः ॥ इषे त्वा । १ । अनुवाकः । पदानि । ३५ ॥

शुठिघस्वः । १ । व्सोः पवित्रम् । ३ । ४२ । घा-
ढम्फाचा । २ । अग्ने व्रतपते । ७ । १०६ । अैभा-
तङमीः । ३ । पवित्रे स्थः । २ । ५४ । ङीणङाडी ।
धाम्मोऽसि । ३ । ६३ । जीवतिढः । १३ । घृष्टि-
रसि । २ । ४४ । घोचक्रुङ । २ । धिषणाऽसि । २ । ६६ ।
गृघागङिः । ७ । सँव्वपामि । ङगेन चक्षि । २ ।
आददे । ५ । १०२ । आभुठुघीः । ७ । अनिशितो-
ऽसि । ३ । ५१ । ङजञ्जिः । ७ । ऋचः । ३१ ।
अनुवाकाः । १० । पदानि । ६१४ ॥ कृष्णोऽ-
सि । ६ । १२४ । ढीवादिप् । १२ । अग्ने व्वाजजि-
त् । ३ । ६५ । चुढाचीपः । १ । मयीदम् । ५ । १०-
क्षौघाक्षयीः । ५ । अग्नीषोमयोः । ५ । १२२ ।
ठामाढ्पूः । २ । अग्ने दब्धायो । ४ । ७६ । क्रो-
मटाङः । ३ । सँव्वर्चसा । ४ । ८६ । जोवङतुः । ४
अग्नये कव्यवाहनाय । ६ । जोङ्ठङुः । १ । ऋ-
चः । ३३ । पदानि । ६६८ ॥ समिधाग्नि-
म् । ४ । ३६ । गृत्राङक्रि । ३ । भूर्भुवः । ४ । ५०
वौडाजिच्चे । अग्निर्ज्योतिः । २ । ३७ । गेमग-
अः । १ । उपप्रयन्तः । २६ । ३६७ । ले । १४ ।
स्वः सुप्रजाः । ३ । ४२ । घाणिगाक्षी । ४ । गृहा
मा । ३ । ५३ । ङनीक्षाजा । २ । प्रघासि-

नः ॥ ५ । ७२ । छाभिढाकुः । १ । पूर्णा दर्वि । २ । ३३ । गिकङ्घः । १ । अत्रन्नमीमदन्त । ६ । ६८ । चैधोचिगा । ४ । एषते । ७ । ८६ । श्रोमाफशे । ४ । ऋचः । ६२ । अनुवाकाः । १० । पदानि । ८ । ५६ ॥ एदम् । २ । चादिछाढी । ४ । हृत्वयासि । ४ । ४५ । घुत्तजघः । ३ । आकूत्यै प्रयुजे । १२ । ३६ ॥ गूजगिखः । ३ । ऋक्सामयोः शिल्पे । २ । ४७ ॥ घेटघीगुः । ५ । व्रतं कृणुत । ६ । १३६ । भूत्सृधुघुः । ५ । एषा ते । ५ । ६७ । छेथञटि । ४ । वस्व्यसि । ३ । ६३ । चिणाङ्क्लाः । ३ । एष ते । २ । ५५ । ङुनडिडिः । ३ । युवमा त्वा । ४ । ८१ । जणुञिठौ । २ । अदित्यास्त्वा । ८ । १४० । डौशुनार्धं । ६ । ऋचः । २७ । अनुवाकाः । १० । पदानि । ७४२ ॥ अग्नं स्तनूः । डीताञज । २ । आपतये त्वा । ४ । १०८ । जैरिनिदिः । ५ । ताम्रायनी मे । २ । ४८ ॥ धैङघन्ये । ४ । इन्द्रघोषस्त्वा । ३ । ४८ । घैपाटक्कृ । ४ । युञ्जते मनः । ८ । १५७ । णोभ्रर्दभै । २ । नारिरसि । ४ । ७४ । छौधिघिदै । ४ । ध्रुवोऽसि । ५ । ८१ । जफाठाडी । ८ । विभूरसि । ४ । ७८ । छैक्विवगाच् । २ । ज्योतिर-

सि । ५ । १०४ । ओवोडाने: । ७ । उरु व्वि-
ष्णो । २ । ५४ । डीटिचटा । ऋचः । ४१ । अनु-
वाकाः । १० । पदानि । ८०६ ॥ अग्नेर्गीर-
सि । ५ । ८८ । जैवक्षठः । ५ । उपावीर-
सि । ४ । ८२ । जैमिजाठ । ४ । माहिः । ६ । ११२ ।
टावायिनौः । ३ । सम्ले । ३७१ । छमातटैः । ५ ।
समुद्रं गच्छ । २ । ५७ । डनागिटा । ४ । हवि
ष्मतीरिमाः । २ । ३५ । गुघीखगः । ३ । हृदे
त्वा । ५ । ५० । जौसुटथ् । ६ । रावाऽसि । ८११७ ।
घेसुगोभै । २ । ऋचः । ३५ । अनुवाकाः । ८ ।
पदानि । ६५८ ॥ व्वाचस्पतये । ३ । ५६ । डो-
दजाडी । २ । उपयामगृहीतोऽसि । २ । ३० ।
खोटछिखाः । १ । आवायो । २ । ४ । गौटछी-
छ । अयंव्वाम् । २ । ३३ । गिचवडा । या वा-
म् । १ । १३ । किअगड । तम्प्रत्कथा । ४ । ६१ ।
भगीनतोः । ५ । अयंव्वेनः । ३ । ६६ । चूयाथटाः । ३ ।
ये देवासः । ३ । ५३ । डिठडजा । २ । इन्द्राय
त्वा । २ । २६ । खोगचछी । मूर्द्धानन्दिवः । २ । ४२ ।
घाठा डगीः । १ । यस्ते । १ । २५ । घुजघ-
घुः । १ । प्राणाय मे । ३ । ३५ । गुकन्वघाः । ३ ।
मघवे त्वा । १ । १५ । कुखअः । ३ । इन्द्राग्नी

ऽआगतम् । १ । १३ । किगखाङ । आघ । १ । १४ ।
ओमासश्चर्षणीधृतः । १ । १० । औचकक । ऋगु-
तामे । १ । ६ । ओकअगा । इन्द्रमरुत्वः । १ । २२ ।
खाघाखक । मरुत्वन्तम् । १ । १७ । केकगाङः ।
मरुतान्वा । १ । ३० । इइअअकः । १ । सजोषाऽ-
इन्द्र । १ । १६ । कोचिघखा । मरुत्वाँ २ ॥ ऽइ-
न्द्र । १ । २० । कौभछाई । यओयक्षा । १ । ६ ।
ओगाकाअ । उडच्युम् । ६ । १०२ । भालठौफिः । ३ ।
ऋचः । ४६ । अनुवाकाः । २५ । पदानि । ९८८ ।
आदित्येभ्यस्त्वा । ४ । ७० । चौतीचिजे । २ । वा-
ममद्य । २ ३५ । गुटङाच । २ । सुशर्म्मासि । १ । ६ ।
ओगगआः । बृहस्पतिसुतस्य । २ । ५१ । डशि-
अठेः । १ । हरिरसि । ३४५ । घुतिर्षबिः । ३ ।
समिन्द्र । ६ । १११ । टरैधानी । उरुटंञ्हि । ४ । ८७ ।
जैपिणिते । २ । एजतु दशमास्यः । ५ । ७१ । छभ-
ठथाः । १ । आतिष्ठ । १ । १८ । कैक्षाक्षाखः । १ ।
युदवाहि । किखगख । इन्द्रमित् । १२ । काखुका-
ङा । यस्मान्न । २ । ४३ । घिठपङचीः । १ । अ-
ग्ने पवस्व । १ । २३ । खिगकिङा । २ । अदृश्रमस-
स्य । १ । २३ । खिचाअघः । १ । आजिघ्र । २४९ ।
घचगगिः । १ । विनऽइन्द्र । १ १७ । केङाखक । वा

ऋस्प्रतिम् । ६ । १६ । कोङङगा । १ । विश्वक-र्मन्नृहविषा । १ । १७ । केङाखङ । अग्नये त्वा । ४ । ५२ । ङाञीअटै । इह रतिः । ३ । ६७ । चेतुक्षणैः । परमेष्ठ्यभिधीतः । १० । १९५ । युक्ष्यै म्नीमौ । ऋचः । ५७ । अनुवाकाः । २२ । पदा-नि । १०१६ ॥ देवसवितः । ४ । ७६ । छोधया-म्णि । २ । इन्द्रस्य वृष्णः । युङयेदनौः । ३ । देव-स्याहम् । ६ । १ । ६२ । ताभ्या भिज्ञौ । ४ । आप-ये स्वाहा । ३ । ६८ । चैथजैछा । ४ । वाजस्येम-म् । ८ । १२३ । ठिफौशिशुः । ५ । अग्निरेकाक्ष-रेण । ४ । ७२ । छाभूरथू । एष ते । ४ । ६६ । चू-न्मारार्धैः । १ । सविता त्वा । १ । ४३ । दिङघा-ड । ऋचः ३६ । अनुवाकाः । ८ । पदानि । ९२८ ॥ अपो देवाः । ४ । ५६ । ङूङमीङङः । १ । सोमस्य त्विषिः । ५ । ८६ । जोषपिठौ । ४ । ऋवेष्टा दन्दशूकाः । ६ । १०७ । जेवटुवौ । ८ । सोमस्य त्वा । ३ । ७८ । छैढौजठै । ४ । मित्रावरुणयो-स्त्वा । ५ । ६२ । क्षादिनिढैं । ४ । स्योनाऽसि । ४ । चेवातक्ष । ४ । सवित्रा प्रसवितृणा । १ । २४ । खिगगात्र । अश्विभ्यांपच्यस्व । ४ । ६५ । चु-टाटठू । ऋचः । ३२ । अनुवाकाः । ९ । पदा-

नि । ५७८ ॥ युञ्जानः प्रथमम् । ८ । १३४ ॥ डौ-मिद्दारो । ६ । प्रतूर्त्तं वाजिन् ॥ १५ । २१८ ॥ पो-न्वोडशीर्ग्यूः । १ । अङ्गिरस्त्वाखनामि । १० । ४४ । टौवचेर्धखे । ४ । अपो देवीः । १२ । २०८ । नो-न्द्दोशुन्यौं । ६ । आपो हि । ११ । १५८ । शौन्वि-नाहु । १२ । अदितिष्ट्वा । ४ । ७४ । चौपक्तजो । ८ आकूतिमग्निम् । १७ । २४० । वोक्ष्मीग्नोस्थै । ४ । ऋचः । ७८ । अनुवाकाः । ७ । पदानि । ११७८-इग्नानो रुक्मः । १६ । ३८७ । वेहेवाङ्गोर्व्यौः । ५ । टौखेर्धवे । ४ । अपो देवीः । १२ । २० । नो-न्वोशुन्यौं । ६ । आवो हि । ११ । १५८ । शौन्वि-नाङ्खु । १२ । अदितिष्वा । ४ । ७४ । छौपक्त-जो । ८ । आकूतिमग्निम् । १७ । २४० । वौखौं ज्नोस्थै । ४ । ऋचः । ७८ । अनुवाकाः । ७ । पदा-नि । ११२८ ॥ इग्नानो रुक्मः । १६ । २८७ । येहे-वाङ्गोर्व्यौः । ५ । दिवस्परि । १० । १८२ । दान्यू-लुर्ज्यैः । १ । उदुत्त्वा । १ । १७२ । याह्लासुफः । ७ । अपेत । १५ । २३३ । त्रिर्खिंहो स्वौ । अस्तुन्वन्त-मथजमानम् । ११ । २१७ । याऽओषधीः । २७ ।

दानि। १६७३ । मयि गृह्णामि। १३ । २३२। वान्धमुवुन्मौः । ५ । ध्रुवाऽसि। ११ । १७२। यावालैतः। ६ । मधु व्वाताः । ६ । १२५। दृष्ट्वौघड। ८। सप्यक्स्रवन्ति । ८ । १२४ । ठोषोऽह्नः। ४ । इमम्मा। ६। १२। भ्माती जरमु। २। अपाङ्व्वा। १। २०। कौड्ंककः। ६ । अयमपुरः। ५ । १०६ । ओर्म्नसुर्फम्। ऋचः। ३ । अनुवाकाः। ६। पदानि। ८०७४ ॥ ध्रुवक्षितिर्ध्रुवयोनिः। ५ । ८२ । भ्माथटिताः। ५ । सजूर्ऋतुभिः। २ । ३८। गैद्भ्रूङ्ती। मूर्द्धा व्वयः। २। ४३। धिशातची । इन्द्राग्नीऽअव्व्यथमानाम् । ३ । ३५। गुडङिच्छुः। ३ । आयुर्म्मे। ६। ७६। क्षोमक्षजौ २। आशुस्त्रिष्टत्। १। ४१ । घड्यवगिः। अग्नेर्भागः। ३। ५६ । डोधढणोः। १। एकया स्तुवत। ४। ७८। क्षेविधलिङा। ऋचः। २६। पदानि। ४६५। अनुवाकाः। ८ । अग्ने जातान्। ५। १६६। रश्मिनासत्याय। ४। ८०। क्षौतिथर्ढि। २। राज्ञसि। ५। ८७। जेश्रडुदः। २ । अयं पुरः। ५। ७५। कुलामावे। ६ । अग्रमग्निः । २४ । ३२० । पोहव्यीत्रैथच्यौं। ४ येनऽऋषयः। ७। १२०। ठौञमेदिलेः। १। तपस्तपस्यः। ४। ६२। चाटाः। ऋचः। ५४। अनुवाकाः। ७। पदानि। ८३३ । नमस्ते। २३३। विश्व-

ञ्जूपूणे । ४ । हिरण्यवाहवे । ५ । ६५ । वुभ.फटी । उष्णीषिणे । ५ । ४३ । धिम्नरक्र्म । तचाभ्यः । ५ । ४२ । घाटधञ्जः । १ । ज्येष्ठाय । ५ । ४१ । घञतञ । सूत्या-य । ४ । ३५ । गुखक्षक । २ । भ्रमराय । १ । ७ । एगङ्ख । पार्याय । ५ । ४८ । घोटदकु । द्रापेऽअ-न्धस: । ७१ । १८८ । दामीहामै: । ७ । कृच: । ६३ । अनुवाका: । ८ । पदानि । ७०३ । अश्मन्नूर्ज्जम् । ८ । घोटदकु । ८ । १५४ । योन्यऽसु । ६ । न-मस्ते । ५ । ६३ । चिपिडक्षा: । ३ । अग्निनसि गसे न । ७ । १५४ । ठिसेर्द्रूपै: । २ । चक्षुष: पिता । ८ । । ४६ । द्रुमीयीञ्यु: । १ । आशु: शिशान: । १३ । २८१ नक्षत्न्यौचिर्मी: । १३ । उद्देनम् । १४ । २०८ । नै-लिवज्युर्खै: । १ । कामद्धस्मग्निना । १३ । २०८ । नोक्षुविश्नौ: । १ । शुक्रज्योतिश्च । ७ । ७२ । छान्दु-लाक्षो: । १ । द्रुमर्ठ० स्तान । १३ । २०८ । नैऽहैमू-न्यौ । ४ । ऋच: । ८२ । अनुवाका: । ८ । १४६५ ॥ वाजस्य । ४५६ । उत्तेक्षाजा । सत्यं श्रद्धा । ४ । ४८ । वैश्सनो । ऊर्क् सूनृता । ४ । ४८ । घैसजतु । अ-श्मा । ३२३ । गिपखच । अग्निरिन्द्र: । २० । कौ-टवञ्ज । अप्शूरश्मिः । ५८ । ङैम्पयिकि । एका ति-स्र: । ४ । ४१ । घनामीद्र । वाजाय स्वाहा । ३० ।

नसा। ११ । १०४ । श्रीऽग्रधाणे। ऋच: ८१

अनुवाका: । ६ । पदानि । १३४ ॥ इमम्ने । ८। ११८

दैव्याहावा । ४ । समिद्धोऽअग्निः । ११ ६८ । श्रों-

श्वोमौर्कं । वसन्तेनऽऋतुना । ६। ४४। घोतळष।

होता यक्षत् । १२ । १४८ । श्रैमूर्गुशन्वं । २ । अग्निश्व-

नौ छागस्य । ६ । १४६ । देवस्फमर्हो । ६ । देवस्व-

र्हिः । १४ । २८९ । लोम्यौमणोर्कोः । ६ । ऋच: । ५०

अनुवाका: । ६ । पदानि । ६४२ ॥ तेजोऽ-

सि । ५ ८० । छौफुटथ । २ । अपाम्मोदाय । १ । ६ ।

श्रोश्रश्क । १ । हिङ्काराय । २ । ५४ । डौश्रवडो ।

हिरण्यपाणिमूतये । ६ । ८४ । जौघादप् । विभू

र्मात्रा । ६ । ३७ । नेथचङः । १ । काय क-

स्मै । १ । २४ । खौकश्रख । आब्रह्मन् । घापिजन्व: ।

१ । चक्षुषे श्रोत्राय । ६ । १४ । ईश्र-

श्र: । १ । प्राच्यै दिशे । १ । ६ । श्रोश्रश्र: । अद्भ्यो

ऽवार्य: । १ । १२ । काश्रखश्रा । व्याताय धूमा-

य । १ । १८ ॥ कौखडंख । इन्द्राय पृथिव्यै । १ । ६ ।

श्रोखश्श्रा । नक्षत्रेभ्यो नक्षत्रियेभ्यः । १ । २४ ।

खौनचका: । १ । परिसवेभ्यः । १ । ३ । इगकश्र । अ-

सवे व्वसवे । १ । १५ । कुश्रचक । इषायोर्ज्जाय । १ । २ ।

श्रा । श्रलश्र । स्वः स्वाहा । १ । ४ । ईककाश्र । प्राणो-

ऽपानः । १ । ५ । उडचक्षा । एकस्मै द्वाभ्याम् । १ । ६
ऊक्षगक्ष । १ । ऋचः । २६ । अनुवाकाः । १६ । पदा-
नि । ४४१ ॥ प्रजापतये त्वा । १ । २३ । खिगागस्व ।
यः प्रागातः । १ । २३ । श्विक्ष्वुयकाः । १ । युञ्जन्ति
ब्रह्मम् । ८ । १०८ । ऐभीछते । २ । वायुष्वा । ५ । ६३ ।
भिडमुडाभ्ये । ६ । अग्वेऽग्निके । ३ । ४४ । घीत-
टाढ । २ । उत्सवत्याऽश्व । १२ । ४४ । ठौकटा-
भूः । १ । गायत्री त्रिष्टुप् । ५ । ५६ । ङ्कटकेः । ३ ।
कस्त्वा । ६ । ८४ । जुयछिग । १२ । किंश्चित्-
त् । ६ । १०७ । अयिजुते । ४ । काऽर्हम् । ८ । १३८ ।
डैडयर्णोवि । २ । सुभूः स्व मभूः । २ । २३ । खिभ्रव-
चाः । ऋचः । ५७ । अनुवाकाः । ११ । पदानि । ८४४ ।
अश्वस्तूपरः । १० । १६६ । तीहृ ममृत ङ् । धूम्राम्न्व
सन्ताय । १० । ११६ । दृहृव्यङ्ः । १ । समुद्राय
शिशुमारान् । १० । १३७ । हेर्हयाङ । मयुः प्राजा-
पत्यः । १० । १९२ । घल्लिलयू । ऋचः । ४० । अनु-
वाकाः । ४ । पदानि । ५१४ । शादन्द्भिः । १ । ४० ।
गौठिक्षाणि ॥ व्याघ्रप्राणेन । १ । ४१ । घचाडादि ।
मशकाक्षेः । ६ । खघोचता । अग्नेः पक्तिः । १ । ३० ।
गायगच्छ । मरुताए स्कन्धाः । १ । २४ । खोगगाङ ।
पूषणवनिष्ठुना । १ । २२ । खाङचढः । इन्द्रस्य क्रो-

ड: । ८ । ३५ । गुजेडन्का । विष्टतिन्नाब्या । १ । ९६ । ब्वजगडा । यच्चमे । वैम्कक्काघे । आनः । १० । १८१ । घल्सोभाद्रि: । ७ । मानः । ८ । १४८ । ठैदियाभी: । ३ यदश्वस्य । ८ । ६३८ । डैमफास्तू: । ३ । यूले । ६ । १६४ । त्रिथठुद्दे । २ । इमा नु । १ । ३० । ब्वौम्भागिडी । ऋच: । ४४ । अनुवाका: । १५ । पदानि । ८१२ ॥ अ विनप्रव । १४ । २१८ । पैक्लोडिर्भू । १० । उच्चा ते । ११ । १३६ । उडूप्राधिती । ४ । ऋच: । २५ । अ नुवाका: । ७ । पदानि । ३५४ । समास्त्वा । ८ । १७३ । थिघोरवो । ४ । जहत्वोऽअस्य । १२ । १३७ । हेवय- ठूचे । ४ । पीवोऽअन्ना । १२ । १७७ । यन्हवंषो । ४ । अभित्वा । ११ । १६५ । तुम्यपाशो: । ३ । ऋ च: । ४४ । अनुवाका: । ४ । पदानि । ६५० । होता यक्षत् । ११ । १२४ । टिष्पगुपुन । २ । देवस्वाहि: । टोथेभोत्यु । २ । समिधानम्सहत् । १३ । ११८२ । टैभा न्योष् । देवस्वाहि: । २ । ४१ । घह्नश्च्ति । ऋच: । २६ । अनुवाका: । ४ । पदानि । ४२७ ॥ समिद्धोऽअञ्ज- न् । ११ । १८६ । धूंव्होवहतु: । ८ । यदक्रान्द: । १३ । २३१ । वावाम्नेसुन्दि: । ५ । समिद्धोऽअद्य । १२ । २०२ । नकोनीकु । ८ । कोतुङ् क्षसरावन् । २४ । ४४१ । भ्वष्टलैधर्वसलैर्धि । १२ । ऋच: । ६० । अनुवाका: । ४ ।

नदानि । १०७१ ॥ विश्वानि देव । ४ । ६१ । चच-
डयो । तपसे कौलालम् । १६ । ३५० । ज्यः कुसङ्घ्रह-
च्याहसत्रु । ८ । ऋचः । २० । अनुवाकाः । २ । पदा-
नि । ४११ ॥ सहस्रशीर्षा पुरुषः । १६ । २३७ । फो
ल्पिर्हर्षि । १ । अद्भ्यः सम्भृतः । ६ । १०५ । अनु-
ष्टिपै । ऋचः । २२ । अनुवाकाः । २ । पदानि । ३३० ।
तदेव । ७ । १०३ । त्विष्यस्त्रैर्स्त्रि । वेनस्तत् । १ । १५ ।
सोभ्रूफोन्चु । ३ । ऋचः । १६ । अनुवाकाः । २ ।
पदानि । २६२ । अग्ना जरासः । १४ । २०३ । नाह-
ज्रसोर्भुः । ५ । आपश्चित्तत् । १२ । १४८ । दोहद्दोघु-
र्ह । ४ । विभ्राड्बृहत् । १२ । २०० । धोशैगौद्धा-
। १० । प्रवाहजे । १० । १५३ । शिवतोश्च । २ । प्र-
वायुम् । १३ । १८० । यौध्योतुडमोः । ७ । प्रवीर-
या । १२ । १८६ । दोघ्च्यैकतुः । ३ । आनः । १३ ।
१९२ । धाव्याणूसैं । ९ । ऋचः । ८७ । अनुवाकाः । ७
पदानि । १३०५ ॥ यज्ञ मग्नतः । १० । १४७ । डभु-
भिर्यु १२ । पञ्चनद्यः । १० । १६१ । तेश्यिपाश्चे । ६
सोमो धेनुम् । १० । १६३ । तिघेनूशै । ४ । आरा-
त्रि । ९ । १६२ । ताभ्यिविलोः । ५ । पूषन्तव । १० ।
१४८ । ढोभनूसेड्वेः । ३ । न तत् । ८ । १४६ । ढून्वो-
श्वहो । ५ । ऋचः । ५७ । अनुवाकाः । ६ । पदानि । ९३४ । अ

पेतः । ६ । ३८ । डोघेठियः । १ । अपाघम् । ८ । १३४ । डौनिज्य । ४ । ऋचः । १८ । अनुवाकाः । २ । पदानि । २७३ । ऋचंव्याचम् । ८ । ६८ । क्रौञ्चाक्काद्ु । १० द्यौः शान्तिः । १५ । ७३ । छिपादाणो । ४ । ऋचः । १३ । अनुवाकाः । २ । पदानि । १७२ । नासिरसि । ३ । ३६ । गङ्गागिरवाः । १ । यमाय सखाय । १० । १६२ । ताव्वीनीलु । ऋचः । १२ । अनुवाकाः । २ । पदानि । १६८ । सरस्वत्यसौ । ६ । ७५ । कुणडिङ्की । ३ । यमायाङ्गिरस्वते । १० । १२३ । ठमीतियीः । ३ । नचस्यन्वा । ७ । १०७ । जमाधीणो । १ । ऋचः । २३ । अनुवाकाः । २ । पदानि । ३०४ । स्वाहा प्राणेभ्यः । ६ । ४८ । जैधिाद्र । उग्रश्च । ७ । ८१ । भामीत्ताघु । २ ऋचः । १३ । अनुवाकाः । २ । पदानि । १७१ ईशा वास्यम् । ८ । १३२ । ञाघोडिघी । १ । अन्धन्तमः । ६ । ७६ । कोणडिषे । ऋचः । १४ । अनुवाकाः । २ । पदानि । २११ ॥ इतिश्री पण्डितसिद्धेश्वरसूनुना पण्डितरामचन्द्रविरचिता वेदपरिभाषा शिक्षा समाप्ता ॥ अथ वेदपरिभाषा कारिका शिक्षा सटीका प्रारभ्यते ॥ श्रीरामं सद्गुरुं याज्ञवल्क्यं कात्यायनं तथा ॥ नत्वा पदानां वक्ष्यामि लक्षणं चतुरक्षरैः ॥ १ ॥ अनुवाकेऽनुवाके चाम्नाये माध्यन्दिनीयके ॥ परिभा-

वर्तिष्ठः, इति विसर्गौ लिखितः । क्वचित् विसर्गावपी-
ति लिपिकरोऽलिखत् । अङ्कोऽपि यथा तत्रैव १३ तदङ्काङ्के
यत्र विसर्गौ न लिखितस्तत्र समाप्तिः अथवा नसमाप्तिः ;
तयोर्निर्णयार्थं अत्र समाप्तिस्तत्राङ्क एव लिख्यते । यथा-
प्रथमाध्याये द्वितीयानुवाके वसोः पवित्रमित्यत आर-
भ्य माह्वार्मा इत्यन्तरान्ते तत्र सञ्जर्जैकं बन्धकमेकम्
इति लिखित्वा इत्थं सः अङ्क एव लिखितः । अधुना
सङ्ख्यानिर्णयार्थं स्वराणां व्यञ्जनानां च सङ्ख्यानि-
यमकारणं चाह ॥ ककारादिहकारान्तास्त्रयस्त्रिंशद्व्य-
ञ्जनाः स्मृताः ॥ सङ्ख्या पूर्तिस्तु नैकेन संयोगं तत्र कार-
येत् ॥ ५ ॥ अस्यार्थः । ककारमारभ्य हकारपर्यन्तं
त्रयस्त्रिंशद्व्यञ्जनानि यस्मिन्नन्ते यद्व्यञ्जनं लि-
खितं तस्य या सङ्ख्या सैव तदक्षरकोष्ठस्य ज्ञेया ।
गकारे त्रयः, चकारे षडित्यादि । यथा प्रथमा-
नुवाके "गु" इत्यत्र गकारेण त्रयः । "ठि" इत्यत्र
ठकारेण द्वादश । यत्र तु एकेन व्यञ्जनेन सङ्ख्या-
पूरणं नास्ति तत्र सङ्ख्यापूर्तिपर्यन्तं व्यञ्जनानां सं-
योगं कृत्वा लेखनीयम् । यथा द्वितीयाध्यायस्यान्ति-
मेऽनुवाके । अग्नये कव्यवाहनायेत्यत्र ञोङ्कुङः ।
इत्यत्र द्वितीयाक्षरे ङकारेण पञ्च वकारेण एकोन-
त्रिंशत्, मिलित्वा चतुस्त्रिंशत्सङ्ख्या ज्ञातव्येति ॥

५ ॥ ऋ ऌवर्ज्या अकाराद्या औकारान्ताः स्वरा दश ।
आद्ये द्वितीयादिषु तु नवैवाकारवर्जिताः ॥ ६ ॥ -
अस्यार्थः । स्वरास्तु ऋऌवर्ज्या इत्यकारादयः औका-
रान्ताः अआ इई उऊ एऐ ओऔ इति प्रथमाक्षरे स-
र्वा ज्ञेयाः । यथा प्रथमाध्यायस्य प्रथमानुवाके "शु" इ-
त्यत्र उकारेण पञ्च । द्वितीयाद्यक्षरनये तु अकारं
त्यक्त्वा आकारमारभ्य एकादिनवपर्यन्ता गणनीयाः ।
यत्र तु अकारस्तत्र शून्यम् । यथा प्रथमानुवाके "ठि"
इत्यत्र इकारेण द्वौ । तथा तत्रैव "च" इत्यत्र अका-
रेण शून्यमभावइत्यर्थः ॥ ६ ॥ नवाधिके तूपरिस्थरे-
फेण दश वा नवाः ॥ एकोनविंशत्यधिके ऽनुस्वारात्तिथ-
यः स्मृताः ॥ ७ ॥ अस्यार्थः । यत्र तु स्वरेषु नवापेक्ष-
या ऽधिकसङ्ख्या अपेक्षिता तत्र तदक्षरस्योपरि रे-
फात्मिका कुण्डली लेखनीया तया दशसङ्ख्या ज्ञा-
तव्या । तत्र यद्येका कुण्डली तत्र दशैव । यत्र विंश-
तिः । यथा तृतीयाध्यायस्य चतुर्थेऽनुवाके उपप्रय-
न्तइत्यत्र चतुर्थाक्षरे "र्त्ति" इत्यत्र रेफेण दश इका-
रेण द्वौ मिलित्वा द्वादश । कुण्डली द्वयं तु सर्वग्रन्थ-
मध्ये स्थलद्वये लिखितं तत्र विंशतिः । यथा चतुर्विं-
शतितमेऽध्याये तृतीयानुवाके समुद्रायेत्यस्मिन् "र्हो"
र्हिपड्वी इत्यत्र द्वितीयाक्षरे तथा एकत्रिंशेऽध्याये स-

मंत्रं चैव ते रुद्रेति पूर्वार्द्धेन गवेधुकतण्डुलाञ्जुहु-
याद्धनकामो वीरक्रमेण शतपुष्पीं क्षीरेण जुहुयात्स-
प्तम्यर्ॡ० शतगुणमुत्पद्यते द्वितीयार्द्धेन मृषकशालभो
त्पाते क्षेत्रमध्ये बलिं निवेदयेत्पिष्टपूतिकामुगरुपाएर-
सादिभिरुपशाम्यति ॥ ४ ॥ द्विपदचतुष्पदानामुपसर्गे
भेषजमसीति दधिमधुघृतं जुहुयाच्छान्तिर्भवति
त्र्यम्बकमित्यर्चार्द्धेन शान्तिकामः पुष्टिकामो वा धा-
न्यशाकिसमिधो जुहुयात् त्र्यम्बकमिति कन्यानाए सौ-
भाग्यकामानां पतिकामानां भगकामानां वा सर्वा-
भिरेताभिराज्यहोमः पुरुषस्य कन्याकामस्यानेनैव हो
मः कन्यानामग्रहणं कर्त्तव्यमा इति भयेषु जपेद-
भयं भवति जपेन सर्वोत्तरवादी भवति लोकस्य वचन-
विधेयो भवति त्र्यम्बकमित्यृग्भयेन धत्तूरकपुष्पाणां घृ
ताक्तानां चतुष्पथे शून्यायतने वाऽग्निमुपसमाधाय श-
तसहस्रं जुहुयात्साक्षाद्भगवन्तं त्र्यम्बकं पशुपतिं दृष्ट्वैव
तेनेत्युपतिष्ठते ह्युपस्थानात्सेऽभीष्टान्कामाँल्लभत एते-
नैव गुग्गुलधूपो दीपश्च नवनीतेनाथ भगवन्तं त्र्यम्बकं
पश्यति चेत्सुवर्णरजतमिश्राणां भाजनानाए सहस्रं ल-
भते ॥ ५ ॥ आकूत्याऽइत्यष्टौ स्रुवाहुतीर्जुहुयाद्राज-
कुलेभ्यो भयन्न भवत्यन्वहं जुहुयात्काएस्यभाजना-
नाए शतँल्लभते तिलाहुतीनामयुतं जुहुयाद्ग्रामे

ह्यापदो न भवत्यकालेन कश्चिन्म्रियते । चिदसीति सहस्रं जपेत्सर्वोत्तरवादी भवति लोकस्य वचनविधेयो भवत्यनेनेत्तनूरिति मोक्षितरेणु ताभ्ययोऽयुतान्सहस्रं जुहुयात्सर्वातिथिर्भवति । युञ्जते मनऽइति वैष्णवानुवाकं जप्त्वा सायंप्रातः प्रयुञ्जानो दीर्घायुर्भवति भयमन्यताऽपि न भवति । दिवो वा विष्णऽइति महाव्याहृतिवत्कर्म । विष्णो रराटमित्ययुतं जप्त्वाऽष्टसहस्रं जुहुयात्पातकेऽपि भयन्न भवत्ययन्नोऽग्निरिति रात्रौ शरीरमायुधञ्चात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयो भवति ॥ ६ ॥ इदमापः प्रवहतेत्यप्सु निमज्ज्य जपेदहोरात्रोषितो यावज्जीवकृतात्पापात्प्रमुच्यते । देवाश्शोऽइति व्याधिघातकराभिचारिकाभिरभिचारी युक्ता हि केशिनेत्युपश्रुतिरहोरात्रोषितो भूत्वोपश्रुतिं कुर्याज्जुहुयाद्वसन्तऽआयुष्ट्वमग्ने पवस्वेति ब्रह्मार्चसकामस्याज्यहोमऽउदुत्यमिति ब्रीहितण्डुलानपयसा संयुक्तान्सहस्रं जुहुयात्सर्वातिथिर्भवति । चित्रन्देवानामिति महाव्याहृतिवत्कर्म । चिन्नऽइन्द्रेति यस्मादधिको भवितुमिच्छेत्तल्लक्षणेन विद्यया धनेन यशसा वा तस्य नामग्राहं जपेदधिको भवत्यनेनैवाज्यञ्जुहोति जुहुयाद्यामनिष्टं ब्रूते । अग्निर्मूर्द्धेति यामेव कन्यामिच्छति तस्या

मामग्राहमायसीं सूचीं द्वादशाङ्गुलां सहस्राभि-
मन्त्रितां कृत्वा तस्याऽएव गृहद्वारे निखनेन्न म्रियते
न चान्यस्मै प्रदीयते ॥ ७ ॥ प्राणायऽइत्यवकाशाञ्-
न्नित्यं जपेत्तेजस्वी भवति निकजध्याजिघेति रूहस्रं
घृद्वाऽग्नौ समिधोदुम्बरगोमयहोम: पशव्यं वल्मी
गोमयेन गो: प्रकृतिं कृत्वा देवसवितरित्यन्नभागभ-
वति । व्याजस्येममिति । सप्तभिर्ऋग्भिराज्याहुति-
सहस्रं जुहुयाद्यज्ञादन्यत्र यज्ञ होति तच्च मूल्यं सह-
स्रं गुणमुत्पद्यते तदक्षय्यं भवत्यग्नेऽअच्छेति सहस्रनि-
म्नान्न्यदुम्बरयवतिलधान्यापामार्गतण्डुलान् जुहुयाद्धन-
कामो वीरक्रयेण शतपुष्पीं क्रीत्वा जुहुयात्तन्मू-
ल्यसहस्रगुणमुत्पद्यते । उदुम्बरसमिधमयुतं जुहु-
यात्सुवर्णमुत्पद्यते । गोरोचनामष्टसहस्राभिमन्त्रितां
कृत्वा ललाटे तिलकं कुर्यात्सर्वजनप्रियो भवति ।
सोमꣳ राजानमिति मासं पौर्णमास्याꣳ रूद्रत्सर-
ꣳसोममुपतिष्ठेत ब्राह्मणायाग्रं दत्वा भुञ्जीत क्षि-
प्रꣳ सोमयाजी भवति । प्रनो यच्छत्वित्यन्नकामो
होमद्रव्याणि जुहुयादयुतमर्यमणमित्यादित्याभि-
मुख: प्रतिदिनं काममभिसन्धाय जपेत्क्षिप्रमेव ल-
भते ॥ ८ ॥ एष ते निर्ऋतऽइति माꣳसङ्गृहीत्वा
जम्बुकास्थि वा शूर्पेन्यस्य चतुष्पथेऽहोरात्रोषित: शि

रसि सहस्राभिमन्त्रितं कृत्वा क्षिप्रं क्षिपत्वाऽप्रेक्ष-माणो गच्छेद्यावत्क्रीतं तावदष्टगुणं भवत्यनेनैव क्षु-धकाण्टकहोमो गृहान्नैर्ऋतस्थानं गत्वाऽभिचारेण होमविधानेनाग्निमुपसमाधाय शतसहस्रं जुहुया च्छत्रुकुलमुद्धरति विषरुधिराक्तैर्ग्राममुद्धरति राजा-नं नगरं वोत्सादयितुकामो वैकङ्कतकण्टकानां ती-क्ष्णतैलाक्तानां विषरुधिरेण कटुतैलाक्तानां सक्तद्वि-गुणार्धं शतसहस्रं जुहुयाद्धोमान्ते नदीं प्रस्रवणां वा गत्वा कपिलागोमयेन लिङ्गं प्रतिष्ठाप्य पञ्चगव्येन स्नापयेद्रुद्राध्यायं जपित्वा शुल्ककैः कर्तुं गीतिर्भव-ति ह्यमोघं कर्मेत्याचक्षते ॥ ९ ॥ देवस्य त्वेत्यभिचर्य-माणः स्रुवेणापामार्गतण्डुलाञ्जुहुयात्स्रुवं च तस्मि न्देशऽऽगमने च प्रतिमन्त्रमेते च प्रत्यङ्गिरोऽपि दे-वाऽइति देवं वर्षयितुकामऽऔदुम्बरबिल्ववेतसवारणा-न्दधिमधुघृताक्ताञ्जुहुयात्प्रजापते न त्वदिति महा-व्याहृतिवत्कर्म । कद्रुद्र यत्तऽइति पालाशसमिधो जुहुयात्सुवर्णमुत्पद्यते पायसं जुहुयाद्घृतमधुमिश्र-मथ प्रदमेवापामार्गौदुम्बरवारणानाममावास्यायामेत-त्कर्म ॥ १० ॥ हर्ठंसः शुचिषदिति विरजो मन्त्रो नाभिमात्रमुदकमवतीर्यादित्याभिमुखः शतसहस्रं जपेदुपपातकेभ्यो मुच्यते द्विगुणेन महापातकेभ्य-

अनुष्ठत्वा सर्वान्वेदानवाप्नोति । चत्वारि शृङ्गेत्या-
र्षभो मन्त्रः सकृद्व्यसनाद्देवाज्यो भवति द्रुपदा-
दिवेति निमज्जने जपेद्धोरकोपितो विपापो
भवत्यथ महापातकसंयुक्तः पञ्चगव्याहारो गोष्ठे-
ऽग्निमुपसमाधाय गोमयेनानुलिप्ताङ्गोऽयुतं जप्त्वाऽष्ट-
सहस्रं जुहुयाद्विपापो भवत्युद्वयमिति पापप्रणाशि-
न्यादित्योपस्थानं कुर्यात्पापनाशनत्यादित्यस्य सायुज्य-
मतो यद्युद्वयं चित्तमर्चिरित्यभिमुखो जपेदनेना-
होरात्रकृतं दुष्कृतमपहरति देवा यज्ञमिति ब्राह्म-
णानुवाकं जप्त्वा ब्रह्मलोके महीयते । सुरावन्त-
मिति चतुर्थेन पौर्णमास्याः संवत्सरं सोम-
सुतिष्ठत ब्राह्मणायान्नं दत्त्वा भुञ्जीत हिमर्ठ० सो-
मराजो भवत्यग्निना वैश्वदेवेनेति देवताऽभिषेकं कुर्या-
द्यद्देवा इतिन्यृचं कूष्माण्डं० हिरण्यगर्भो यः प्रा-
णतो ब्रह्म यज्ञानं मही द्यौरुपह्वास्याग्ने नय याते घ-
र्मा यमाय स्वाहेत्यष्टर्चं जप्त्वा सुरापानाद्ब्रह्महत्या-
याः प्रमुच्यते । पितृभ्यः स्वधायिभ्य इत्यनुवाकशेषे-
णोत्तरेणानुवाकेन पितृणामक्षय्यतृप्तिर्भवति व्यस-
नेनऽस्तु नेत्याज्याहुतिसहस्रं जुहुयात्सविता वरदो
भवति ॥ ११ ॥ इति यजुर्विधानशिक्षायां प्रथमोऽध्या-
यः ॥ १ ॥ शिवो भवेत्यग्न्युत्पाते सर्वव्रीहिरसवतीः

संस्थाप्य कपिलाघृतेनालोड्य पञ्चदशधाऽभिमन्त्र्य च-
न्द्रं दृष्ट्वा पिबेत्पयसा मासं भुक्त्वा श्रुतिधरो भवति या-
ऽस्योषधीरिति द्वाभ्यामोषधीरभिमन्त्र्य पाययेदगदो
भवति। यातंश्वऽइत्याम्रसमित्पर्णफलानि जुहुयादारोग्य-
कामऽश्चायुष्मान्भवत्योषधीः प्रतिमोदध्वमिति बीजवापनं
कुर्यान्निष्पन्नसस्यो भवत्योषधीरितीति मातृनाम्न्योदु-
म्बरतिलयवापामार्गहोमो गोहिरण्यकामोऽश्वत्थे व-
ऽइत्यश्वत्थसमित्पर्णहोमो गोधनकामः पुरुषनाम्नी
चैषा यत्रौषधीः समग्मतेति रक्षोघ्नो यक्ष्मेऽन्यत्रापि राक्ष-
सपिशाचडाकिन्यादिभीतस्याज्यहोमोऽश्वावतीरित्य-
रिष्टनाम्न्या शान्त्यर्थं पयोन्नं ब्रीहींश्च जुहुयादु-
च्छुष्मा ऽइति बन्धनस्थो मुच्यतेऽहष्कृतिरित्या-
त्मनिष्कृत्यर्थं होमोऽति विश्वाऽइत्यात्मशर्करे प्रावना-
य जपहोमौ रक्षणाय च,यदिमाऽइति ब्रीहिहोमो-
ऽघनाशाय धान्यप्रतिकृतिनाऽभिचारे वशीकरणे च,
यस्यौषधीरिति स सर्पनाम्न्याऽत्मपावनाय च यवहो-
मोऽभिचारे, साकँयक्ष्मेति यस्मिन्काष्ठे श्वष उपवि-
शेत्तदादायाष्टशतसहस्रमभिमन्त्र्य शत्रुगृहे निखनेदु-
द्वसति शत्रुगृहं क्षिप्रं पदे निखनेत्कुष्ठी भवति चाष-
पत्त्रेण सहस्राभिमन्त्रितेन गृध्रपत्त्रेण वा प्रतिकृतौ
मर्मसु विद्धो म्रियते,ऽअन्यावऽइति वचो नाम्न्याऽऽ-

[illegible] ष्टशतसहस्राभिमन्त्रितां ब्रा-
ह्मीं वचां वा प्राश्नीयात्स मेधावी भवति तथा च
चत्वारो वर्णा वश्या भवन्ति, याः फलिनीरिति द्वा-
भ्यां सर्वौषधीमिश्रेणोदकेन सहस्राभिमन्त्रितेना-
त्मानं स्नापयेद्यावज्जीवकृतात्पापात्प्रमुच्यते ॥ ३ ॥
मुञ्चन्तु मेति रहस्यो मन्त्रः सर्वोपद्रवनाशः ऽआ-
तुरमालभ्याष्टसहस्रं स्पृष्ट्वा जपेत्सर्वोपद्रवाञ्छमयति शा-
न्तुभये वर्ष्यमाणः करम्भाहुतीनां रक्षणाय ता-
नि द्रव्याणि जुहुयाद्यावज्जीवमन्नान्यक्षय्याणि भवन्ति,
या ऽओषधीरित्यृगुभयेनौषधीमूलमुद्धृत्य कर्णे निधाय
सर्वजनप्रियो भवति । याश्चेदमिति राजिकाभिः
प्रतिकृतिं कृत्वाऽभिचरद्रव्यहोमोऽभिचारजपहोमश्चा-
नेनैव पालाशपत्रजालपाशग्रथितात्स न लोष्ठप्रक्षे-
पऽश्मात्मरक्षा शिखाबन्धश्चेति, नाशयित्री बलास-
स्येति तुषगवणभस्माभिश्राणामन्नाद्याहुतीनां त्रिक-
टुकेनाभ्यज्य चतुष्पथे शून्यायतने वाऽग्निमुपसमाधा-
य शतसहस्रं जुहुयात्कृष्णाष्टम्यामारभ्य यावत्कृष्णा-
च्चतुर्दशीन्तावदुत्सादनं रात्रौ रङ्कृत्यानिर्गमनमु-
पयाति मा वऽइत्यनेनातुरमियाद्द्वेष्यशान्तिकरणे प-
योऽन्नमक्षीक्षीन्वा जुहुयादोषधयः समिति सार्वका-

कर्मेत्याचक्षते यथा सिद्धे महानसेऽन्नाष्टसहस्रं जुहुयात्तद्गृहेऽन्नमविच्छिन्नमक्षय्यं भवति। मा नो महान्तमिति तिलाहुतीनामयुतं जुहुयाद्गृहे बालानां परिजनस्यारोग्यं भवति मा नस्तोका इत्युक्तानि कर्माणि भवन्ति ॥ ५ ॥ नमो हिरण्यबाहव इति षड्भिरनुवाकैः कटुतैलाक्तान् राजसर्षपाञ्जुहुयाच्छत्रुरुत्सादयति फट्कारेण देवस्योपरि मालायामधः शिवमवलम्ब्य शस्त्रेण शिरसि रुधिरं स्राव्य स्नात्वा वैकङ्कटकेनाभ्यज्य देवं करांगुलिनखेनोत्पाद्य शत्रोर्नाम स्मरन्नुपेत्सर्वबलं शत्रुमुत्सादयेदेवं कृत्स्नं ग्रामं नगरं वैतान्हा राजानमहोरात्रेण ब्राह्मणमर्धेन क्षत्रियं त्रिभागेन वैश्यं षड्भागेन शूद्रं स्त्रियं वा व्याहृतं कर्मेत्याचक्षते ॥ ६ ॥ अथ वशीकर्तुं ब्रह्मपालाशाश्वत्थापामार्गार्कं रतविल्ववेतसोदुम्बरादीन्प्रतिवर्णं प्रतिमन्त्रं दधिमधुघृताक्तानामयुतं जुहुयात्क्रमशो वर्णचतुष्टयं वशमानयत्यथ राज्यकामः कुमुदसौगन्धिकनीलोत्पलादीन् पूर्वकल्पकारोपदेशाच्छाकल्योर्भगवतो नूपतिष्ठते नमः सिकत्यायेति कलशमभिमन्त्र्याष्टशतेन राजानं स्नापयेत्सर्वविनायकेभ्यो भयं न भवति रोगाभिभूतं स्नापयेन्मुच्यते सर्वरोगैर्नमो वः किरिकेभ्य इति तिलाहुतीनामयुतं जुहु-

यात्कार्षापणानाए सहस्रमुत्पद्यते.पामार्गसमिद्भिः सु-
वर्णगुगुत्प्रतिमानां चतुरङ्गोत्कृत्याष्टसहस्रं जुहुयादल-
ङ्कृतां कन्यां लभते.य वा सुवर्णशतं गोशफेनैका
दशसहस्रमाज्यहोमात्तावत्यो गावः स्युस्तिलतन्दुला-
नाढं शतसहस्रेण सर्वसम्हद्धस्य तिलयवधान्यशतपु-
ष्पमयीं प्रतिकृतिं कृत्वा जुहुयाद्ग्रामसान्यवश्यौस्यात्ता-
मुपलपद्मानाढं शतसहस्रेण स्वरूपिणी राजलक्ष्मीर्भ-
वति चणकमितानां गुग्गुलुगुटिकानाढं शतसहस्रं
जुहुयात्स्फीतसामन्तराजो प्राप्नोति देवस्य दक्षिणायां
मूर्तौ बिल्वसमिद्भिर्महाराज्यं महाचतुष्पथे वल्मी
कमृदा गोमयेन लिङ्गं प्रतिष्ठाप्य रुद्राध्यायेनाभि-
मंत्र्य एतया पायसमन्वहं बलिमुपहरेद्भूतेभ्यो भूति-
कामो देवस्य दक्षिणायां मूर्तौ वचाफलमर्कं वा सूक्ष्मं पि
ष्ट्वा ताम्रभाजने न्युष्य कपलघृतेनालोड्य प्रादेशमन्या-
ष्टसहस्रमभिमन्त्र्य पिबेदप्रतिहतवाग्मः स्यादाक्ष-
द्विश्चौदुम्बरसमिद्भिर्हृद्ध्यक्ताभिर्महाग्रामस्वामी स्यान्न च
गावः क्षीयन्ते विल्वफलैर्घृताक्तैः सुवर्णमसिद्धे रज-
तमेतेनैवौदुम्बरामलकौ हरीतकिविभीतका व्याख्या-
ताः ॥ ७ ॥ अन्तर्धानसिद्धपर्वतशिखरमारुह्य क-
णगुग्गुलान्नं सहस्रमभिमन्त्र्य देवस्य हस्ते निवे-
द्य तावज्जपेद्यावद्द्रूमायते पूर्णे शतसहस्रे अन्ता-

शोकरणमभिचारश्च शान्तिर्भवति ॥ ८ ॥ या ते रुद्रे-
ति जीवेणीयाः प्रतिसरं सहस्राभिमन्त्रितमेका-
दशग्रन्थियुतं बालानां गुर्विणीनां च हस्ते बध्वा ता-
स्तु सुखेन वर्धन्ते धनिकधारणिकेभ्यो भयं न भवति
परि नऽइति वटप्ररोहसमिधोऽयुतं जुहुयादायु-
ष्मन्तः पुत्रा उत्पद्यन्ते मीढुष्टमेति महाभये चोरभये-
ऽग्निभये प्राणसर्वभये सङ्कटे वा मनसा जपेत् क्षेमे-
णागच्छत्यायाति च विकिरिद्रेति महाजनविरोधे रा-
जा वा प्रत्यनीकपरिवृतः सर्षपैर्व्रीहिजुहुयात्सर्वं
भजनं नमः शम्भवः पत्रागन्ने सहस्राणीति महाज-
जनमरणे राजोपद्रवे वा शाल्मलिविकङ्कत्यौदुम्बरस-
मिधो यवतिलान्वैकादशकृत्वोऽभिमन्त्र्य शतसहस्रं
जुहुयात्कुमारापायसेन भूतेभ्यश्छिद्रालमात्सेन रा-
क्षतान्मुच्यतेऽसङ्ख्यानीति रक्तवासा रक्तोष्णी रक्त-
माल्यानुलेपनो देवमभ्यर्च्य श्मशाने एकवृक्षे नदीपु-
लिने चतुष्पथेऽरण्ये वैकादशशरानर्कमूलपरिवेष्टि-
तान्महाजातैलाक्ताञ्छ्मशानाग्नौ प्रदीप्ते प्रक्षिपेद्दश-
र्वैनैकादशाभिमन्त्रितेन तद्भस्मना शत्रोः प्रतिकृ-
तिं कृत्वोरसि कटुतैलेनाभ्यज्य दक्षिणभूभागेऽवस्था-
प्य एकैकेन सहस्राभिमन्त्रितेन शरेणैकादशसु प्राणा-
यतनेषु विध्येदासहस्रयोजनगतं शत्रुलोकगतं वा

अनुमुत्पादयेद्देवासुरयक्षगन्धर्वरक्षोभूतपिशाचादौ शा-
न्त्यर्थं देवं घृतक्षीरेण स्नापयेद्रुद्राध्यायेनाभिमन्त्र्य मा
नस्तोक इति वा घृतमधुपायसमयुतं जुहुयादधो-
देशमधिष्ठाप्य कर्पटवृक्षादिषु मध्यतऽएषऽएव विधिव-
श्मादने फट्कारेण सर्वकर्माणि कारयेत् ॥ १० ।
नमोऽस्तु त्रिकोण मध्याह्ने तुषकण्टकाञ्जुहुयात्सर्षपा-
न्वाऽहरहर्महाप्रत्यङ्गिरेऽष्टौ देवयोनयः सपिशाचास्त्वरन्
ति निशाचराः श्रृण्वन्ति ये यातुधानास्ते सर्वे भस्मी-
भवन्त्यथ प्रदीप्तेऽग्नौ स्वकेशानालुप्य जुयाद्रुद्राह रक्ष-
स्त्वहस्तऽउपतिष्ठते यदुच्यते तत्करोति अथ वा ग्राम-
मुत्सादयति ॥ ११ ॥ अथ वा कृत्यामुत्पादयितुं कामो
रक्तवासा रक्तोष्णीषो रक्तमाल्यानुलेपनो देवमभ्यर्च्य
श्मशानाङ्गारेषु लोहकीलान्प्रादेशमात्रान्महातैलाक्ता-
नाक्तसहस्रं जुहुयादुत्तिष्ठति रक्ताङ्गी रक्तनेत्रोद्ध्वकेशी
शी कृत्या तां क्षिप्रमेव रुधिरमांसेन पूर्णपात्रेण तर्पये-
दन्यथा कर्त्तारमेव हिनस्ति सा त्वरितापितेति नाम-
कदूतिकान्वधिष्यामीति वक्तव्याऽमुकं व्यापादयन्ति
सा तूर्णं वधमुत्पादयति यामाज्ञापयति त्रैलोक्याव-
स्थितमप्युत्सादयत्यथ वैकैकस्य शारीरस्य ग्रामे गृहे न
गरे वा व्याहृतं कर्मेत्याचक्षतेऽथ प्रयोगः शाकयाव-
कपयोभक्षो द्वादशरात्रमुपोष्य लघुभ्यो लघूनि गुरुभ्यो-

गृह्णीयात् सहस्रेषु महितेषु महाग्नि तुलापुरुषयान्द्रायणमध्यतऽएषऽएव विधिः कल्पग्रहणे त्वाचार्यमभिवाद्यानुज्ञाय पठेन्न चैवान्यथा पठेदिति न चैवान्यथा पठेदिति ॥ १२ ॥ इति यजुर्विधाने तृतीयोऽध्यायः । ३ ।

परस्यात्मकृतं सङ्क्रामयितुमिच्छन्कर्तुं शिलां कृत्वा कुम्भं गोदकपूर्णेन सहस्राभिमन्त्रितेनात्मानं स्नापयेदश्मन्नूर्जमिति प्रदक्षिणं परिहृत्य कुम्भे शिलां कृत्वा शंनोनिमग्राहं यं द्विष्मऽइति निरस्य कुले सर्वकृतस्य सङ्क्रामन्ति विश्वतश्चक्षुरिति महाव्याहृतिवत्कर्म देवस्य दक्षिणायां मूर्तौ मधुघृतपायसाक्तानां पद्मानां सहस्रं जुहुयात्स्थण्डिलमुपलिप्यार्कप्रस्तरे कृष्णाष्टमीमारभ्य यावत्कृष्णाचतुर्दशीं सप्ताहं सुवर्णं लभते यो नः पितेति महाव्याहृतिवत्कर्म ॥ १ ॥ आशुः शिशानऽइत्यनुवाकेनाप्रतिरथेन रथमायुधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयो भवति चौरमहिषव्याघ्रसिंहराक्षससर्पादिभयेषु मनसा जपन्क्षेमं भवति यमिच्छेत्स्तम्भयितुं तमनेन स्तम्भयेदुदेनमित्युदुम्बरसमिदाज्यहोमः प्रजापशुपुष्ट्यर्थं स्तूयं शिशिरित्यर्कसमिद्भिः सुवर्णमुत्पद्यते विमानऽइति द्वयोर्महाव्याहृतिवत्कर्म मध्यन्दिने समुद्रगां नदीं गत्वा होममधोऽग्निमुपसमाधाय घृताक्तानां कृष्णतिलानां-

ढं॰ शतसहस्रं जुहुयाद्विमानैरिन्द्रवर्णैः समारूढाः स-
र्वालङ्कारभूषिताः सपरिच्छदाश्चाप्सरसोऽभ्यागच्छन्ति त-
त्र सर्वाभरणानि वासाꣳसि मुक्त्वा विवाससः स्वा-
नि गुह्यायतनानि दर्शयन्त्यो जले क्रीडन्ति यदि ता-
नि दृष्ट्वेन्द्रियविकारो भवेद्दृष्टैवपदं ददाति तदा तस्मै
अथ दृढव्रतोऽग्ने महानीचमानास्तावज्जपेद्यावदुदक-
मुत्तीर्य वासाꣳसि परिधाय यावन्ति दिव्यैः सुगन्धि-
चन्दनैरङ्गानि विलेपयन्ति पाणौ गृहीत्वा विमाने स-
मारोपयन्ति तासाꣳ सर्वाधिपतिर्भवति ताभिः सह
लोकं गच्छति यं भोगं कामयते तं कुरुते मध्यन्दि-
ने चानुवर्तितैर्यवधान्यापामार्गहोमः सोऽर्थप्रदाना
य देवकन्यां पश्यति कन्याऽऽवेत्यर्घं दद्यादनेनैव विधि-
ना महाव्याहृतिवत्कर्म प्रतिदिवसमित्याज्याहुति-
सहस्रं जुहुयात्प्राचीमनुप्रदिशमित्याज्यसहस्रं जु-
हुयाद्द्विपदश्चतुष्पदकामोऽनन्तसहस्राचेति सहस्रना-
म्ना पृथगुक्तानि कर्माणि भवन्ति ॥ २ ॥ ताꣳ सवितुरिति
सहस्रधारया गोमयꣳ सहस्राभिमन्त्रितं कृत्वा सन्धि
प्रगरोरस्त्वागाद्याञ्जनमस्य गावो न क्षीयन्ते दुह्यमा-
नायास्तस्या नाम गृहीत्वा परिवेषणं कृत्वोदकमवती-
र्यं तावज्जपेद्यावन्मुक्तो धेनुं लभते शमीशमिधो जुहुया-
दृषभादिकꣳ॰ प्रतिलभतेऽथ वा गोघृतेनाज्यं जुहुया-

न्ति च पुष्णाति ॥ ५ ॥ विश्वेऽअद्येति महाव्याहृ-
तिवत्कर्म त्वाग्नो नऽइति त्रिभिर्होमञ्जुहुयादयाचिते-
न धनमाप्नोति ममेति पयोदधिमधुघृतमिश्रान्सर्व-
न्होमाञ्जुहुयाद्वर्षति ॥ ६ ॥ ऋताषाडिति षड्भेना-
ऽज्याहुतिसहस्रं जुहुयाद्वर्षति स नो भुवनस्येति गृह-
वास्तुभ्यऽआज्याहुतिसहस्रं जुहुयाद्वास्तुदोषैर्न लिप्य-
ते यास्तेऽइति सौभाग्यकामो जपेद्वटप्ररोहसमिद्भिः
पुत्रकामो दिवो मूर्द्धेति महाव्याहृतिवत्कर्म मूर्द्धन्नि-
त्यास्वहोरात्रं प्रविश्य जपेदहोरात्रं वर्षतोदकं हविरि-
त्यात्मनस्त्वोजोबलाद्वै पयसा होमऽइन्द्रियविकलो ज-
पेत्पूर्णेन्द्रियो दीर्घायुः प्रजावांश्च स्यादग्नऽआयूंषी-
त्याज्यं हुत्वा गुरुगृहे प्रविश्य जपेन्निमन्त्रितोपचर्यते-
ऽर्कनेनेति जपकामो लाजाञ्जुहुयादाज्यं वा यो
भूतानां त्रातारमिति च महाव्याहृतिवत्कर्म मही-
मूषु तृचेन नावमारोहेत्क्षेमेण तरति ॥ ७ ॥ हि-
रण्यपाणिमूतयऽइत्यर्कसमिद्भिरयुतं जुहुयात्सुवर्णमु-
त्पद्यतेऽजीजनऽइति रहस्यो मन्त्रऽएतेन नागा वश-
मुपयान्ति लोहं त्रिशूलं सहस्राभिमन्त्रितं कृत्वा
दक्षिणपादेनाक्रम्य पयोदधिमधुघृतैरयुतं हुत्वा विकृ-
तरूपास्त्रियऽउत्तिष्ठन्ति किमस्माभिः कर्तव्यमिति ब्रु-
वन्त्योऽभिरुचिकामेन ताऽआज्ञापयेत्नमोऽस्तु सर्पेभ्य-

ऽइति तिसृभिरर्घ्यं दद्यादग्न्यागारे गोमयलिङ्गं प्रतिष्ठाप्य पञ्चगव्येन संस्नाप्य दक्षिणतः शूलं निखनेत्पुनः सहस्रं जपेत्सुवर्णशतं लभेतुमिदं कर्मेत्याचक्षते दृष्टौ मिखण्डानतसीपुष्पाणि वा युञ्जन्तीति महारण्ये जपेदभयं भवति सर्वकर्मसु मध्ये कृच्छ्रेण गायत्र्या घृतसहस्रं जपेत्पूर्वमेवैतत् ॥ ८ ॥ गणानां त्वेत्यौदुम्बरतिलयवापामार्गधान्यादिहोमार्थप्रदक्षुतुष्पथे वैतद्धोकारणे पिचुमन्दपत्रैर्हुत्वा त्र्यम्बकप्रतिकृतं वल्मीकस्थदा कृत्वाऽर्घ्यं न्यार्ठं०समाषोदनमपूपतिलपिष्टकपरःमान्नफलपुष्पादिभिर्बलिमुपहरेदृतुग्रहस्यैतानि कर्माणि भवन्ति रुवं नस्टद्धः स्याद्गायत्री चिष्टुविति पञ्चभिः शङ्खेनाज्याहुतिसहस्रं होमात्सिद्धिः ॥ महानामन्यऽइति खादिरस्रुचा तिलतैलं निष्कृष्याऽष्टसहस्रं जुहुयाद्बन्धबन्धान्मुच्यते वैकङ्कतकाष्टककटुतैलविषरुधिराक्तानां द्विगुणं शतसहस्रं हुत्वा सगर्ठं०राजानमुत्सादयति ॥ ९ ॥ अथ वशीकर्तुमिच्छन्निति खां परिजप्य बिल्वकाष्टकान्हुत्वा राज्ञो मन्त्रभेदं जनयेत्सर्वत्र मध्यमकृच्छ्रो गायत्र्या लक्षं वेन्द्रस्य क्रोडऽइत्युदरमभिमन्त्र्य रात्रौ स्वपेदुदरविकारो न स्याद्वष्टतिमित्याज्याष्टसहस्रं भूमिलाभाय जुहुयाज्जुम्बकायेति वरुणकृदपोमन्त्रोऽश्वमेधावभृथेयुक्तो ब्रह्मह-

हुत्वा सुभगः स्यात्कन्यादानसमये १०००० जपेद्यावज्जी-
वं सौभाग्यं भवत्यऽसुन्नभूयादित्यायुः कामो दूर्वान-
भिघ्नस्तुषाऽऽजुहुयात् ॥ २ ॥ ऊर्ध्वाऽअस्य ेति वैकङ्क-
ताभिः शत्रुभयं नश्यति जातीकण्टकैश्चनविधेयस्य तनू-
नपादसुरऽइति न्यग्रोधमूलेऽग्निमुपसमाधायाशोकपु-
ष्पाणां घृताक्तानां शतसहस्रं जुहुत्वाऽसुरकन्यां पश्यति
दृष्ट्वाऽनुवाकशेषे न दद्यादग्निमुखे दिव्यट॰ सुवर्णं प्र-
यच्छति नचेत्तूष्णीमनुगच्छेद्भयान्निवर्तते बिलप्रवेशन-
काले पाणौ गृहीत्वा प्रविशति चिराचोषितस्तत्स्वा-
मी भवति राये न्वित्यनुवाकशेषं निवाते जपेद्वातो वा-
त्येकया च तिसृभिघृतं जुहुयाद्वातरोगान्मुच्यते ॥ ३ ॥
अभित्वेत्यघोरान्नं जपेद्दर्पेति कया नऽइति माषो-
दनं तिलमिश्राणामन्नानां त्रिकटुकेनाभ्यज्य चतुष्प-
थे शून्यायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुया-
द्धोमान्ते चित्राङ्गदो विद्याधरराजो दिव्यट॰ सुवर्ण-
राशिं ददाति ॥ ४ ॥ ऊर्ज्जोनपातमिति दधिमधुघृतैरा-
पद्भ्यो मुच्यते ॥ संवत्सरोऽसीत्याज्यमष्टसहस्रं जुहु-
त्वा यावज्जीवमारोग्यं स्यात्मेत्याऽइति मधुतिलाक्तल-
सहस्रं जुहुयात्सुवर्णमुत्पद्यते न च कश्चिदभिहन्ता
भवति ॥ ५ ॥ केतुं कृण्वन्नित्यनुवाकेन रथं शस्त्रमा-
युधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविश्य जपेज्जयो भ-

वति धन्वनागेति धनुर्वेदमन्त्रः स्वाध्यायाद्यावद्रणदी-
क्षितः क्षत्रियो भवति सा च दीक्षा त्रिविधा गोब्रा-
ह्मणदेवस्वाम्यात्मनां हितायेत्यात्मानं सन्नह्यतऽइ-
ति मर्माणिततऽइति कवचं परिधत्ते धन्वनेतिधनुर्गो-
जयेत्ते ऽआचरन्ती इतिविस्फुरणं वक्ष्यन्ती वेदिति
ज्याभिमर्शनमहिरिवेति हस्तवेष्टनमभिमन्त्रयते ब-
ह्वीनां पितेति तूणं कलापमभिमन्त्र्य परिधत्ते सुपर्णमि-
ति नैर्ऋत्यां दिश्येकमिषुं क्षिपेदप ऽउपस्पृश्य वनस्पते
वीड्वङ्गऽइति रथमालभ्य युंजन्तीत्यश्वयोजनमसि यम-
ऽइतिवश्यममाशुः शिशानऽइत्यनुवाकेनालभ्य विष्णोः
क्रमऽइत्यारुह्याजङ्घन्तीत्यश्वताडनमक्रान्दददित्युत्सर्जमा-
ने जपेद्याः सेनाऽइति परसैन्याभिमुखरथं रथं
वाहयेद्रथे तिष्ठन्नित्यवस्थापये त्सदुन्दुभऽइति दुन्दुभि-
स्ताडनमहिरिवेतीषुं गृह्णाति यत्र बाणाऽइति दिक्षु
नयेयुरक्रान्दऽइतिरथं वाहयेत्तदेवमाविद्धाविध्य प्रा-
क्ताणां चालनमेव युध्यमानेऽपराजितो भवति प्रक्रे-
णापि युध्येत् ॥ ६ ॥ युञ्जेन दत्तमित्यश्वानभिमन्त्रयेत्क्रा-
न्तान्पुनस्त्वोणितऽइत्यश्वग्रन्थीन्मोचयेन्महाँ २ऽ ॥ इन्द्रऽ-
इत्यासनमिन्द्रो छत्रमिति रथं कुतस्त्वमिति योधात्मह-
सामभिभाषयेत्तान्प्रतिजपेत्सुसमिद्धायेत्याहवनीये स-
मिधमादधाति न तद्रक्षाꣳसीत्याज्याहुतीनामयुतं जु-

हुयात्क्षत्रियाणां क्षत्रनाशाय गतायुरपि दीर्घायुर्भवति
शं नो देवीरित्युपस्थाय प्रविशेदेषा रणादीना आक्ष-
योऽपि प्राणसंशये प्राणमाददीत यमेन दत्तमित्यश्वं
सकृदाज्याहुतीनामयुतं जुहुयाच्चतुरश्वयुक्तं रथं
लभतेऽसिग्रमऽइति मधुतिलाञ्जुहुयाद्धेवमनुलेपना-
द्भिरर्चयेद्धृतपापो भवति ब्रह्महनमपि लक्षहोमेन
तारयेत्समिद्धोऽअद्येति होमकाले देवतानामाह्वान-
मग्नये गायत्रायेति सार्वकामिकं चरुं कुर्यात् ॥ ७ ॥
विश्वानिदेवेति महाव्याहृतिवदादित्यमुदयऽउपति-
ष्ठेद्विपापो भवत्युदकसक्ताहारो मासमेकमन्वहं स-
हस्रं जपेद्ब्रह्महत्यादेरपि मुच्यते विभक्तारमिति सप्त-
म्यां कुशपुष्पमालां कृत्वौदुम्बरसमिधो यावच्छुष्यति रा-
त्रपुष्पारायार्द्रकेशस्य साहस्रिकं कर्म महानद्यौ जायते
गोशफेना उत्याहुतिहोमो गोकामाय मध्याह्नेऽन्न-
पिंडं तदस्त्राभिमन्त्रितं निवेद्ये दद्यमन्नं खादने बुभु-
क्षित आदित्याभिमुखो जपेत्सर्वतो भोजनं लभते ॥ ८ ॥
सहस्रशीर्षेति महाव्याहृतिवद्द्वाहमित्यासु प्रविश्या-
होरात्रं जपेदामध्याह्नाद्वर्षति यो देवेभ्यऽइति व-
चमिति रोचनाऽन्या महाव्याहृतिवच्छ्रीश्चेति कुमुद-
सौगन्धिकोत्पलान्युष्य हुत्वा श्रीमान्भवत्युत्तरनाराय-
णेनादित्योपस्थानं कामं नामग्रहणं च यथेष्टं कामं

सर्वत्र सिद्धं कर्म सदसस्पतिमिति चन्द्रग्रहे निराहारे वचां ब्राह्मीं वा सहस्राभिमन्त्रितां पिबेत्परमसेधार्थ स्वाध्यायमेवामिति जपेदिदं मऽइति च श्रीकामो नित्यम् ॥ ९ ॥ अस्याजरासऽइत्यग्निमुपतिष्ठेद्वरदो भवति तेजस्वीत्र द्वयोर्महाव्याहृतिवत् चीणि शताऽग्ने शर्द्धेति त्रिमधुरैः सौभाग्यं शवो मह्येऽइति भूमिकामस्तिलतण्डुलैरिन्द्रो वृत्रमित्यत्रपुष्पाऽश्वायुषऽश्वाथ्यमाज्ज ऽइत्यौदुम्बरीभिर्द्धनकामो विभ्राडित्यनुवाकं सततं जपेत्त्रकामस्तेजस्वी निवृत्तस्थानऽइत्याभिरित्यौदुम्बरीभिः पशुकामो यद्वदेति वासकादिभिर्वशीकरणं तिलकेन तत्सूर्यस्येति चक्षुष्मान्भवति वरामहानिति महाव्याहृतिवत्कृत्वा यज्ञऽइवेति तिलान्पुष्पाणि वा हुत्वा वास्तुपे शतपुष्पीं वा सुभगः स्यात् ॥ १० ॥ आकृष्णेनेति महाव्याहृतिवत्कर्म करवीरपुष्पाणि १००००० हुत्वा तप्तसुवर्णं लभेद्दरिद्रश्वेन्द्रवायूऽइन्द्राग्नी मित्रावरुणेति देवताह्वानं सिद्धये ऽग्नऽइन्द्राग्नी रुद्राऽइति वारुण्यां गच्छेत्क्षेमं भवत्यवीमऽइति घृतेन सर्वभयनाशनं मित्रस्यं हुवऽइति घृतं हुत्वा शिष्टं पिबन्मेधावी स्याद्दद्भिरिति साग्राभिर्हिरण्यं गावऽउपैति दूर्विमधुघृतैः पशुपुत्रसम्पत्तिकामऽउपनोऽनुत्तमेति चेमाऽउ त्वेति पावका-

य प्रतिक्रमीस्याञ्जरासऽइत्यध्यायेन सर्वदेवताराधनं कुर्यात्प्रतिदिनं काममेकैकं लभतेऽध्ययनेन मासात् ॥ ११ ॥ युञ्जानः प्रथमं मनऽइत्यष्टाभिः शिवसङ्कल्पेन मानससमाधिः पितृभिर्ब्रवीति ममृणामग्नाख्याभिचाराणि जुहुयात्कर्म षट्कं सिद्ध्यन्त्यिति पञ्च नद्यऽइति पद्मपुष्पाणि रक्ताचन्दनघृताक्तानि लक्षं हुत्वा साक्षात्पद्ममालिनीं पश्यति यावज्जीवं धनं प्रयच्छतीष्टसन्तुष्टिं च सिनीवालीति प्रजाकामोऽन्नं जुहुयात् यत्र बाणाः सम्पतन्तीति युद्धे वटारोह्योदुम्बरदूर्वाश्च त्यन्नऽइति पुत्रपशुरक्षार्थमाज्यं जुहुयाद्भुवनस्य पत इति नामवेति सद्योजातमात्रवत्सावलीढानां वा जिह्वां उपस्पृशन्ताव ऽचलन्त्यो भवन्ति । इडायास्त्वेति गोघृतेनाज्याहुतिसहस्रं जुहुयात्धेनुशतं लभते । त्वमग्ने प्रथमऽइति नित्यमग्निं स्तुनुयात्सर्वसन्तुष्टो भवति प्रवो महऽइति षडृचेन पितॄनर्चयेत्प्रजाकामऽआहुतिसहस्रं जुहुयात्गोशतं लभते देवेनेति यद्वनमिच्छेत्तावन्ति सप्तीहीञ्जुहुयात्प्रभुत्वं लभते सोमो धेनुमिति सोमचन्द्रग्रहेऽनुदितमुपतिष्ठेत्तन्मासे चेममौदुम्बरीभिर्हुत्वा हिरण्यपाणिः स्यादष्टौ व्यीति महाव्याहृति वहिरण्यपाणिरिति चाभिचारवर्ज्जमादित्योपस्थानं हिरण्यहस्तऽइति सर्पानभिमन्त्र्य रक्षार्थो भवति

ये ते पन्थाः क्षेमेण गच्छति क्षेमकारिण्युभा पिबतमिति रूपकामोऽश्विनौ स्तुयाद्दुष्वप्नादिति प्रातर्दिवा स्वस्त्ययनमनाद्यं च पुत्रार्थी द्रव्यहोमस्तदर्थं महाव्याहृतिवत्प्रातर्जितमिति च यदा बध्नन्निति हिरण्यशं० सप्ताभिमन्त्रितं दक्षिणहस्ते बध्नीयात्सर्वेषां पापचक्षुषां दृष्टिदोषमपोहति न च राजाविरुद्धमाचरेत्प्रियदर्शनो भवति ॥ १२ ॥ इति यजुर्विधाने पञ्चमोऽध्यायः ॥ ५ ॥

परं मृत्यविति बालानां गुर्विणीनां हस्ते सूत्रबन्धो भूतप्रेतादि नाशयति जपहोमौ च प्रौढगर्भे गर्भस्रावे वन्ध्यात्वे च मृतवत्सात्वे मार्ठं सपल्लवापूपजाङ्कलिकारण्यतां सपयोदधिमधुघृताक्तमन्नं निवेद्य सर्वकामिकान्नशं० भुक्त्वा शेषमुग्जप्त्वा मैथुनमुपेयाद्गर्भस्तिष्ठति प्रथमे पतिते आवाहनं द्वितीये पोषणं तृतीये तर्पणं पञ्चमे गर्भस्तिष्ठत्यमोघं कर्मापामार्गमित्यपामार्गहोमः सर्वदुरितदुःस्वप्ननाशनऽआयुष्मानित्याज्यमायुषे रक्षायाऽइमं जीवेभ्यऽइति सीतालोष्टशं० सप्तसाभिमन्त्रितं चतुर्दिक्षु क्षिपेद्दुष्टभयं न स्यात्परीमऽइति शिखाबन्धो मंडलबन्धश्चात्मरक्षार्थाय वशीकरणे तुषहोमो महाभये जपेदभयं भवति राजानमीक्ष्य जपेद्वश्यो भवति हन्तुमागच्छन्तं दृष्ट्वा जपेत्प्रणमति भक्ष्यपुष्पफलादीनि दद्याद्वश्यार्थे च स्योना

पृथिवीति महाव्याहृतिवत्कर्म्म ॥ १ ॥ ऋचं वाचमि-
तीन्द्रियविकलो जपेत्पूर्णेन्द्रियो भवति यन्मऽइति-
कर्मसमाप्तौ दोषपरिहारार्थञ्जपेत् इन्द्रो विश्वस्येति
द्विपदचतुष्पदां शान्तिः क्षीरहोमाच्छान्तिर्भवति शन्नो
मित्रऽइति जनमरणे चोपसर्गाभिचारेषु ज्वरादिरो-
गे स्वाध्यायसमाप्तौ व्रीहिहोमः शान्त्ये विषमग्रहे त
त्समिद्धोमः द्यौः शान्तिरित्यभिचारवर्ज्जं सर्वकर्मसि-
द्धिर्यतो यतऽइति जपेदभयकारिणी॰ सुमित्रिया
नऽइतिजलमञ्जलिनादाय दुर्मित्रियाऽइति द्वेष्यं प्रति-
निक्षिपेत्तमुत्सादयति तच्चक्षुरिति जपेदारोग्याय
पुष्ट्यै ॥ १२ ॥ यमाय त्वा जपेदन्वहꣳ सर्वसङ्कटो
त्तिर्हितश्च स्यात् ॥ २ ॥ अनाधृष्टेति पञ्चचतुर्भिः
पयोदधिघृतमधुतिलैर्जुहुयाद्यथासङ्ख्यमायुः प्रजापु-
ष्टिअन्नतेजस्कामो विश्वऽइति निमित्ते जपेद्धर्त्ता दिव-
ऽइति बुद्धिभ्रंशनाशनो हृदे त्वेति मतो ग्लानौ क
र्मसमृद्धिः पिता नऽइतिमहाव्याहृतिवत् ॥ ३ ॥ इड-
ऽएहीति यामेव धेनुमिच्छेत्तस्या नाम परिजप्य गोस्या-
मीति शब्दं वदेत्तस्यैवापतति गोमयेन गोः प्रति-
कृतिं कृत्वा तन्नाम्ना बध्वा सव्येन गृहीत्वा पयोद-
धिमधुघृतं जुहुयात्तामेव धेनुं लभते यस्ते स्तनऽइति
सर्वकर्माणि सिध्यन्ति स्वाहा सूर्यस्येति वृष्टिकामः

पयो जुहुयात्सद्यो वर्षति समुद्रायेति वातनामानि जपेद्वातो वाति दिविधाऽऽ इति दधिसहस्रं हुत्वा सविता प्रसीदति व्रीह्यादिभिः पुष्टिर्गौर्घृष्टिर्वै-तसगुडक्षीरैस्तैलाक्ताभिः सहस्रं जुहुयात्स्वाहा रुद्रायेति रहस्यो मन्त्रः गवेधुकतण्डुलान्जुहुयाद्धन-कामः ॥ ४ ॥ स्वाहा प्राणेभ्यऽइति महाव्याहृतिव-त्कर्म तं ग्रामे कुर्यान्मनसः काममिति श्रीनाम्ना सर्वा-भ्युदयसिद्धः फलति गोघृतेनाज्यहो १००० मेन गो-लाभो गोमयहोमेन सिद्धिकस्येति विमुखाख्यो मन्त्रः सर्वकामप्रदो गोपशुमरणे गोष्टे वैकङ्क १०००० शतो-हुत्वा शान्तिः कर्णंजोऽहितेनेत्येकादशयजुर्भिर्द्रव्यका-मवर्ज्जं महाव्याहृतिवत्प्रतिदिनमेकादशसहस्रप्रतिम-न्त्रं निर्वपेदेकादशैव धनवऽउत्पद्यन्ताऽएवमन्येष्वपि कामेषु हुत्वाऽध्यायशेषेणादित्यमुपतिष्ठेरेनास्य का-मेणा फलमाप्नोत्यग्नेनयेति नमस्कारोक्तिरग्निस्तुति-रात्मनो वा कर्मसमाप्तौ समाप्तौ च हिरण्मयेनादि-त्योपस्थानमोमित्येकाक्षरस्य परब्रह्मणो नामधेयं वेदा-रम्भे समाप्तौ च जपहोमादिषु शान्तिपुष्टिकर्म चै-तत्प्रयुज्यतऽएतद्विदित्वा सर्वसिद्ध्यत्येतदुपास्य रवि-सिद्धिभाग्भवति कल्याणतरो भवत्येतत्कर्मफलप्रति-पादकं पूर्वकर्मफलाभावाद्भावक्षतस्य कर्मणः स वेद-

फलंयुक्तस्य कर्मणो नास्ति नैव फलमिति तच्छ्रुत्यपे-
क्षया ऽमुष्मिंल्लोके कृतस्य कर्मणः फलठं० हि संप-
त्तिः प्रत्ययं च न च विद्याधरपादप्रसारितघनानां अ
नपूर्वत्वर्णीरसेषु नास्ति यज्ञविरोधित्वादित्यनेनैव प्रका-
रेण सर्वे मन्त्राः प्रकीर्तिता ये नोक्तास्ते च सर्वे ग्रन्था-
न्तराऽवश्य वा सर्वमन्त्राणां विस्तरेण पृथग्विधानं
विस्तरेण पृथग्विधानमिति ॥ ५ ॥ इति श्रीयजुर्वेद-
वाजसनेयसंहितायजुर्विधाने षष्ठोऽध्यायः ॥ ६ ॥ स
माप्तोऽयम् ॥

# अथ स्वराष्टकशिक्षा ॥

ओ३म् हरिः ॥ ओम् साम्ब ॥ अऽइऽउऽऋऽऌऽएऽऐऽओऽऔऽइत्यष्टौ स्वराः ॥ पदान्तपदाद्योः सन्धिः ॥ पदान्तपदाद्योर्य्यएकः प्राणयोगः स सन्धिसञ्ज्ञः स्यात् ॥ न परकालः पूर्व्वकाले ॥ पुनः पूर्वकालसन्धिः विधाने परकालसन्धिं न प्राप्नोति ॥ एकम् ॥ १ ॥ अऽआमपरे ॥ तव अयम् ॥ तवायम् ॥ २ ॥ एकारमिवर्णे ॥ तव इदम् ॥ तवेदम् ॥ ३ ॥ ओकारमुवर्णे ॥ तवऽउदकस्वोदः ॥ ४ ॥ आऽअरकारे ॥ स्वाहाऽऋषभम् ॥ स्वाहऽऋषभम् ॥ ५ ॥ ऐकारमे ऐपरत्वे ॥ तवऽएतत् ॥ तवैतत् ॥ तवऽऐश्वर्य्यम् ॥ तवैश्वर्य्यम् ॥ ६ ॥ औकारमोऽऔपरत्वे ॥ तवऽओजः ॥ तवौजः ॥ प्रऽओजन् ॥ प्रौजन् ॥ ७ ॥ इय्यं स्वरे ॥ स्वाजीऽअर्व्वन् ॥ स्वाज्यर्वन् ॥ स्विऽऊर्गुणे ॥ स्व्यूर्गुणे ॥ असिऽऋतस्य ॥ अस्यृतस्य ॥ ८ ॥ इरिमिवर्णे ॥ स्विऽइत ॥ स्वीत ॥ ९ ॥ उर्व्वं स्वरे ॥ नुऽइन्द्र ॥ न्विन्द्र ॥ १० ॥ ऊदमुवर्णे ॥ अनुऽउत ॥ अनूत ॥ ११ ॥ ऋकारो रेफः स्वरे ॥ धातृऽअंशः ॥ धात्रंशः ॥ १२ ॥

ऋत्वर्ण ऽऋकारऋवर्णो ॥ होतृ ऽऋकारः ॥ होतृकारः ॥ १३ ॥ एकारो ऽयः स्वरे ॥ ॥ अग्ने ऽआयाहि ॥ अग्नयऽआयाहि ॥ १४ ॥ ओकारो ऽवः स्वरे ॥ विष्णोऽएते ॥ विष्णवेते ॥ १५ ॥ ऐरायः स्वरे ॥ भूम्यै ऽआवन् ॥ भूम्याऽआवन् ॥ १६ ॥ एऔ-रावः स्वरे। उभौऽइन्द्रौ ॥ उभाविन्द्रौ ॥ १७ ॥ ओपरा-कारो लोपम् ॥ अद्ध्वायोऽअग्नीतम ॥ अद्ध्वायेऽग्नीतम ॥ १८ ॥ तत्राद्यलक्षणम् ॥ एपराकारो लोपम् ॥ तेऽअवन्तु ॥ तेवन्तु ॥ १९ ॥ वो लोपमुऽओऔषु । उभौऽउ ॥ उभाऽउ ॥ उऽओऽओष्विति किम् ॥ पत्न्यावक्षोरा-ते । २ । इत्यनन्ताकृताच्सन्धिः ॥ अथ स्वरप्रकरणम् ॥ उदात्तानुदात्तस्वरितप्रचयाः स्वराः ॥ १ ॥ अतान्त-उदात्तः ॥ २ ॥ यथा ॥ शम् ॥ प्र ॥ नु ॥ द्वितीयस्य यथा ॥ अधो रक्तोऽनुदात्तः ॥ रुद्र ऽईड ॥ ३ ॥ तृती-यस्य च यथा ॥ उपरि रक्तस्तिर्य्यग्रक्तो वा स्वरितः ॥ स्वः ॥ स्वः ॥ स्वः ॥ ४ ॥ न्युब्जपराऽतान्ताऽउदात्ताः ॥ स्वाहा ॥ स्वर्सार्कः ॥ ५ ॥ चतुर्थस्य च यथा ॥ स्वरितपराऽअतान्ताः प्रचयाः । त्र्यम्बकँयजामहे । ६ । स्वरितः पञ्चधा ॥ जात्याभिनिहितक्षैप्रप्रश्लि-ष्टभेदात् ॥ एकपदे नीचपूर्व्वऽसर्व्वो वा यथा-

न्यतरयुक्तो जात्यः ॥ धान्यम् । स्वः ॥ ७ ॥ उदात्ताद्-
योरचोऽभिनिहितस्वरितो भवत्यकारलोपे सति ॥ ते-
ऽवन्तु । तेऽवन्तु ॥ वेदः असि ॥ वेदोऽसि ॥ ८ ॥ उदात्त-
ऽऽउदात्तस्थाने यवयोः परोऽनुदात्तः क्षैप्रः ॥ युञ्जाम-
तु ॥ नु इन्द्र ॥ न्विन्द्र ॥ ९ ॥ उदात्तानुदात्तयोर्ह्रस्व-
योः स्थाने इकारः प्रश्लिष्टः ॥ वि इत ॥ वीत ॥ १० ॥
अनुदात्तपूर्वजात्यादयस्स्वाराः पितृदानवद्दत्ताम् ॥
वायव्यो ऽ ॥ भुवः स्वः । तेऽवन्तु ॥ वेदोऽसि ॥ अ-
भ्यभि ॥ योजान्विन्द्र ॥ दिवीव ॥ ११ ॥ अनुदात्तपू-
र्वजात्यादयस्स्वारो मनुष्यदानवद्दुदात्तः ॥ भूर्भु-
वः स्वर्द्यौः ॥ सहस्यमिति ॥ कद्रूभ्यो येन्नरिक्षे ॥ स्व-
र्योऽस्तूर्णम् ॥ युञ्जामत ॥ आत्मन्तः ॥ दिवीवेति ॥ १२ ॥
अनुदात्तउदात्तस्वरितयोः ॥ येऽभि ॥ स्वर्गेऽभि ॥ सोऽ
हम् । यो वैनारित्नम् । वीदम् ॥ स्वस्तभितए स्तभितए
स्वः स्वस्तभितम् ॥ १३ ॥ अननुदात्तपूर्वजात्यादयस्स्वा-
रः कम्पमूले ऽउदात्तस्वरितपरत्वाऽभावे ॥ न्यङ् ॥ स्वः ॥
तेऽवन्तु ॥ सोऽसि ॥ त्र्यम्बकम् ॥ न्विन्द्र ॥ वीत ॥
१४ ॥ उदात्तात्परानुदात्तः स्वरितम् ॥ इषे त्वा ॥
१५ ॥ नोदात्तस्वरितपरत्वे ॥ इषे त्वोर्जे ॥ ईशा वा-
स्यम् ॥ स्वरितादनुदात्तानां प्रचयः ॥ वायवस्थ ॥ १६ ॥

नोदात्तस्वरितपरत्वे ॥ आयवस्य देवः ॥ आस्यमिद-
म् ॥ १७ ॥ उदात्तश्चानेकौ स्युदात्तः ॥ प्रऽअर्पयतु ॥
प्रार्प्पयतु ॥ १८ ॥ उदात्तान्निहितस्स्वारः स्वरितात्प्र-
चयो भवेत् ॥ उदात्तात्स्वरितात्पूर्वो नान्यऽआप्यती-
स्वरः । इति स्वराङ्कुशः ॥ कुचेलिनं दन्तमलापधा-
रिणमपङ्क्तानन्निष्टुरवाक्यभाषिणम् ॥ सूर्योदये चा-
स्तमये च शायिनन्नु हाति लक्ष्मीर्यदि चक्रधारिणम् ॥
अथ हस्तप्रवेशलक्षणम् ॥ अनुदात्तो हृदि ज्ञे-
यो मूर्ध्न्युदात्तऽउदाहृतः ॥ स्वरितः कर्णमूले स्या-
न्नासाग्रे प्रचयस्मृतः ॥ ३ ॥ इषे त्वा ॥ आयवं स्य ॥
उदात्तादनुदात्तं तु यामायां भुवऽ आरभेत् ॥ इषे
त्वोर्जे ॥ उदात्तात्स्वरिते चैव क्रमाद्दक्षिणतो न्यसे-
त् ॥ ४ ॥ इषे त्वा ॥ इत्यनन्तकृतं स्वराष्टकम् ॥ २ ॥
कटपा गकुर्वान्नि ॥ ऊर्क् ॥ असि ॥ ऊर्गसि ॥
सम्मार्ड्डसि ॥ सम्मडसि ॥ उत्वयम् ॥ उद्वयम् ॥
त्रिष्टुप् इति ॥ त्रिष्टुबिति ॥ १ ॥ कटतपा उत्पनमाः प-
ञ्चमे ॥ वाक् मनः ॥ वाङ्मनः ॥ षट् महान् ॥ षण्म-
हान् ॥ तत् मित्रस्य ॥ तन्मित्रस्य ॥ अनुष्टुप् मात्या ॥
१ ॥ तद्वनाश्च जजाः प्रचवर्गयोः ॥ तत् चित्रम् ॥ ता-
च्चित्रम् ॥ तत् जुषस्व ॥ तज्जुषस्व ॥ आदित्याद्रास-

ष्णुभिः ॥ आदित्या अ॒स्माँ॒र्ष्णुभिः ॥ ३ ॥ तौ लँ॒ह्मि ॥
परि॒चित्। लो॒कम्॥परि॒च्चिल्लो॒कम् ॥ ४ ॥ अनुनासि-
कलँ॒ह्मि ॥ ताँल्लो॒कान् ॥ ताँ॒ल्लो॒कान् ॥ ५ ॥ ह्रस्वपर-
ङ्नौ द्विर्भावं स्वरे ॥ द॒ध्यङ् ऋषि॑ः ॥ द॒ध्यङ्ङृ-
षि॑ः ॥ अ॒स्मिन्। ऊ॒र्ज्जम् ॥ ६ ॥ नः श्च॒च्छयोः पूर्वस्या-
नुनासिकम् ॥ अ॒ग्नीन् च ॥ अ॒ग्नीँ॒श्च ॥ ७ ॥ नः स-
न्तथयोः पूर्वस्यानुनासिकम्। तान्। त्वम्। ताँस्त्वम् ॥ ८॥
मः परपञ्चमं स्पर्शे॥ व्र॒तम्। च॒रि॒ष्या॒मि। व्र॒तञ्च॑रिष्यामि॥
अ॒पात्क्रमेण ॥ ९ ॥ ङ्नौ क्काभ्यां सकारे ॥ ङ्नौ का-
गमतागमौ प्राप्तः सकारे ॥ प्राङ् सोम॑ः ॥ प्राङ्क्सो
म॑ः॥ चीन् समुद्रान् ॥ चीन्त्समुद्रान् ॥ १० ॥ मोऽनु-
नासिक्यवलान्यवलेषु॥सम्। यौमि॥संय्यौमि ॥ तम्
व्वः ॥ तंव्वः ॥ तम्। लो॒कम् ॥ तँ॒ल्लो॒कम् ॥ ११ ॥ मः
ॐकारऽ० शषसहरेफेषु ॥ सऽ०शितम् ॥ ह्वीऽ-
ष्या ॥ सऽ० शिशाधि ॥ सऽ० स॑ः ॥ अपाऽ रेताऽ
सि ॥ १२ ॥ झयः परः शश्छ्रं सि ॥ तत्। शुक्रम् ॥
तच्छुक्रम् ॥ १३ ॥ झयः परो हः चतुर्थम् ॥ भिष-
क्। होम॑ः ॥ भिषग्घोम॑ः ॥ तत्। हविः ॥ तद्धविः ॥
सम्राट् होम॑ः ॥ सम्राड् ढोम॑ः ॥ १४ ॥ स्वरपरसँ-
योगादिर्द्विः ॥ इषे त्वा ॥ इषेत्त्वा ॥ १५ ॥ रहाभ्याम्-

ब्यः ॥ व्वायवस्थ ॥ व्वायवस्त्य ॥ १७ ॥ इत्यनन्तक्ता हलसन्धिः ॥ अपरविसर्गऽउऽअहशोः । शिव÷ । असि ॥ शिवोऽसि ॥ देवेभ्य÷ । हविऽः । देवेभ्यो हविः ॥ १ ॥ आपरो लोपमऽआपरत्वे । देवाःऽ । अत्र । देवाऽअत्र । देवाःऽआशाऽः ॥ देवाऽआशाऽः ॥ २ ॥ अपरो लोपमा परत्वे ॥ देवाःऽआशाऽः । देवाऽआशाऽः ॥ ३ ॥ आपरो लोपठं॰ हशि ॥ देवाःऽ । हसन्ति ॥ देवा हसन्ति ॥ ४ ॥ अआपरो लोपमिचि ॥ देवाःऽ । इह । देवाऽइह ॥ अघ्न्याःऽ । इन्द्राय । अघ्न्याऽइन्द्राय ॥ ५ ॥ रेफतऽइच्यरस्य रेफमशि ॥ सवितःऽ जजान ॥ सवितर्जजान ॥ अग्निःऽ एकाक्षरेण । अग्निरेकाक्षरेण ॥ ६ ॥ रेफजेच्यरौ लोपठं॰ रेफे पूर्वस्य दीर्घम् ॥ प्रातःऽ रात्रिः ॥ प्राता रात्रि÷ ॥ कक÷रौद्रःऽ ॥ कक रौद्रःऽ ॥ ७ ॥ स्यसऽएषविसर्गौ लोपठं॰व्यञ्जने ॥ एषः स्यः । एषस्यः ॥ स्यः राध्यः ॥ स्यराध्यः ॥ सः । नऽः सन÷ ॥ ८ ॥ सः ते । सस्ते ॥ नम÷ ते ॥ नमस्ते ॥ ९ ॥ चच्छपरत्वे शम् ॥ व्वाज÷ च ॥ व्वाजश्च ॥ १० ॥ लोपङ्खर्परे शरि ॥ अन्तःऽ स्थ । अन्तस्त्य ॥ ११ ॥ इतिविसर्गसन्धिः ॥ अऽइऽउण् ॥ १ ॥ ऋऌक् ॥ २ ॥

एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरट् ॥ ५ ॥ लण् ॥ ६ ॥ ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ घढधष् ॥ ९ ॥ जबगडदश् ॥ १० ॥ खफछठथचटतव् ॥ ११ ॥ कपय् ॥ १२ ॥ शषसर् ॥ १३ ॥ हल् ॥ १४ ॥ अज्झीनं परेण संयोज्यम् ॥ इति स्वराष्टकं संपूर्णम् ॥

---

# क्रमकारिकाशिक्षा ॥

श्रीगणेशाय नमः ॥

प्रणम्याद्यं दिनमणिं योगीश्वरशिरोमणिम् । सर्वज्ञं याज्ञवल्क्यं तच्छिष्यं कात्यायनम्मुनिम् ॥ १ ॥ सर्वं याजुषमन्त्राणां वेदे वाजसनेयके । क्रमावसानविषयां कारिकामारभामहे ॥ २ ॥ श्लोके विंहादिरिष्टितः प्रतीकेषु न दुःसहः ॥ प्रत्येकम् प्रथमा षष्ठी सप्त-म्युक्तश्च कल्पते ॥ ३॥ पदानामानुपूर्व्येण क्रमएषः प्र-वर्तते । गणान्तानां क्रमो नास्ति इति कात्यायनो-ऽब्रवीत् ॥ ४ ॥ न वेष्ट्याश्च द्विवेष्ट्याश्च त्रिवेष्ट्याश्च त-था परे । चतुर्व्वेष्ट्यो मध्यवेष्ट्यः पञ्चवेष्ट्य इतीरि-तः ॥ ५ ॥ अवग्रहोऽनुवाकान्ते अर्द्धर्चान्ते ऋचां तथा ॥ यजुषां वाक्यावसानेष्विति साधारणो विधिः ॥ ६ ॥ प्रत्यक्षं याज्ञवल्क्यं श्रीशम्भुमिश्रविनिर्म्मिता ॥ क्रियतां क्रमितैः कण्ठैः कारिका रत्नमालिका ॥ ७ ॥ ह्रस्वपूर्वो ह्यनुस्वारो दीर्घोनुस्वारभाग्भवेत् ॥ द्वियः परश्चेन्न तथा क्रमकाले तु वाजिनाम् ॥ ८ ॥ ओ३म् ॥ इषेत्वेत्ययमध्यायो ह्यनुवाकान्तवेष्टनः ॥ गायत्रेण त्रिवेष्ट्योऽत्र पुरा क्रूरत्रिवेष्टनः ॥ ९ ॥ देव स-

वितिष्ठिस्टद्व्येकमेषा ते तु द्विवेष्टनः । एतन्ते द्वयेकता त्वग्नीषोमयोरनुवाकष्टत् ॥ १० ॥ अग्ने दव्यायऽएकत्व न्देवागातुविदे द्विटत् ॥ सर्व्वर्च्चोदिषट्कैकामुक विष्णो द्विवेष्टनः ॥ ११ ॥ ततोऽसिद्ध त्रिचतुष्कैकं संव्वर्त्तेति द्विवेष्टनः ॥ यज्ञसञ्चेत्येकताल्तेऽग्नये कव्येति न वेष्टनः ॥ १२ ॥ ये रूपद्विष्टन्नमो हैकमाद्यन्तोऽनंरूपोर्द्विष्टत् । समिधाद्यष्टसु द्विष्टदग्निर्ज्ज्योतिः षडेकता ॥ १३ ॥ इन्द्रः पञ्चादिवेष्ट्यः स्यात्समिदं पञ्चवेष्टनः ॥ उपप्रषट्स्वपि द्विवत्तनूपात् सप्तकैकता ॥ १४ ॥ उपत्वा पञ्चसु द्विष्टदिडऽएह्यन्तवेष्टनः ॥ सोमानाद्यष्टसु द्विष्टत् परिते दूडभस्विष्टत् ॥ १५ ॥ भूर्भुवः स्वोनुवाकैक्यं प्रवासीति द्विवेष्टनः ॥ यदुग्रामित्यन्तवेष्ट्यः स्यात्मो पूषेति द्वयोर्द्विवत् ॥ १६ ॥ अवभृथेत्यन्तवेष्ट्यः पूर्णाद्व्व्यष्टसु द्विष्टत् ॥ एषतैका त्र्यम्बकयोर्द्वयोर्द्विष्टत्परो ऽन्तष्टत् ॥ १७ ॥ वाजिनीत्वाजी द्विवेष्ट्यो वाज्यश्व्यञ्च कैकता ॥ एदमादित्रिषु द्विष्टन्महीनां युगलैकता ॥ १८ ॥ आपो द्विवेष्टनः स्वाहा यज्ञमित्यन्तवेष्टनः ॥ आकूत्यै प्रयुजे त्रिष्टद्विश्वो देवस्य तु द्विष्टत् ॥ १९ ॥ ऋक्सामयोस्त्रतुष्कैक्यं व्रतं कृणु सप्तैकता ॥ त्वमग्नेव्रतपाद्द्विष्टद्रास्वे पञ्चान्तवेष्टनः ॥ २० ॥ एषा ते पञ्चकैकत्वं वस्व्यादिस्त्रिनुरैकता ॥ एष ते युगलैकत्वमभित्यन्तद्विवेष्टनः ॥

ष्टत् ॥ ३३ ॥ अच्छिन्नस्य चतुर्ष्णु द्विष्टद्यंवेनस्त्वमध्यमः ॥
एष तेऽत्यन्तवेष्ट्यः स्याद्ये देवासो द्विवेष्टनः ॥ ३४ ॥ आ-
ग्नेयन्नैक्यमिन्द्राय द्वैक्यं मूर्द्धा द्विवेष्टनः ॥ उपांशोरन्त-
वेष्ट्यः स्यादपो देवा द्विवेष्टनः ॥ ३५ ॥ इष्णाऽऊर्म्मिस्त्वये-
कत्वं सविता त्वानुवाकष्टत् । सोमस्य त्विषिर्य्यमैक्यं सध
मादो द्विवेष्टनः ॥ ३६ ॥ त्वनस्योत्व्वं च्यैक्यं अवेष्ठास्तु-
ष्कान्तवेष्टनः ॥ ऊर्ध्वामारोह चाद्यद्वैवर्ण्णं विद्याद्द्विवेष्ट-
न ॥ ३७ ॥ द्विष्टत्सोमस्य त्विषिर्हिरण्यरूपो त्रिवेष्टनः ॥
सोमस्य त्वाऽन्तवेष्ट्यः प्रपर्वतस्य त्रिवेष्टनः ॥ ३८ ॥ प्रजाप-
तयेति द्विवेष्ट्यो रुद्र यत्त्वन्तवेष्टनः । इन्द्रस्य त्वान्तष्टन्मा
ते द्वित्रद्मनयऽअन्तष्टत् ॥ ३९ ॥ हंसो द्विष्टच्चेयदसि स्यो-
नासि चान्तवेष्टनः । निषसाद द्विवेष्ट्योऽभिभूरादिच-
तुरैकता ॥ ४० ॥ सविचा द्वैण्ट्यमश्विभ्यां युग्मंयुग्मं त्रिष्ट-
द्द्विष्टत् । युञ्जानः सप्तसु द्विष्टदाददे युगलैकता ॥ ४१ ॥
हस्तादिचतुर्ष्णु द्विवृत्प्रतूर्वं युगलैकता ॥ अन्यान्ये-
कादशा नद्विष्टत्पृथिव्याः सधस्थात्त्रिष्टत् ॥ ४२ ॥ अपां
पृष्टन्द्वयोर्द्वि वृत्संवसार्थां त्रिवेष्टनः ॥ त्वामग्ने पञ्च-
दशसु द्विष्टत्त्रिवृद्वृषाग्निते ॥ ४३ ॥ ओषध्येकादशाना-
न्द्विष्टन्मखस्य शिरोन्ततः । कृत्वाय सा द्विवेष्ट्यः स्याद्व-
सवस्त्वाऽन्तवेष्टनः ॥ ४४ ॥ अदितिष्ट्वा युगैकत्वमित्रस्य
युगलन्द्विष्टत् ॥ उत्थाय बृहतीति द्वावाकूतिन्त्वन्त-

ष्टनः ॥ ४५ ॥ मा स्वादिषु च सर्व्वेषु द्विष्टदन्नपते त्रिवृत् ॥ द्विवृद्दृशानोऽध्यायद्विसुपर्णोऽसि नवैकता ॥ ४६ ॥
चिदसीत्यन्तवृदन्ते सञ्ज्ञानञ्च त्रिवेष्टनम् ॥ द्विष्टन्यथि ह्यनुवाको ध्रुवासि चतुरैकता ॥ ४७ ॥ काण्डादिति चतुर्ष्वु द्विवृद्विराड्ज्योतिस्तयैकता ॥ अषाढाद्यास्तयैकोनविंशतिस्तु द्विवेष्टनः ॥ ४८ ॥ इमम्मा स्यान्निवृदेकशफं पशुमिति द्विवृत् ॥ सहस्रमूर्णायुमन्तो ह्यन्तवर्जं द्विवेष्टनः ॥ ४९ ॥ त्वं यविष्ठ द्विवेष्ट्यः स्यादपां त्वेत्यन्तवेष्टनः ॥ नवायं पुरो न वेष्ट्यो ह्यन्त्याभ्यर्धं विना द्विवृत् ॥ ५० ॥ ध्रुवच्चितिश्चतुर्ष्वु द्विवृद्दिव्यास्त्वा त्रिवेष्टनः । सजूर्मूर्द्धा वयश्चेति ह्यनुवाकान्तवेष्टनः ॥ ५१ ॥ इन्द्राग्नी स्याद्विवृद्विश्वकर्मा त्वा युगलैकता ॥ आद्य मूर्द्धाऽशुरर्श्चमार्गैकयेत्यनुवाकवृत् ॥ ५२ ॥ अग्ने जातांद्विवृत्त्रिवत्स हन्नाऽनेः पुरीषन्द्विवृत् । एषादिरश्मिना राज्ञो चायम्पुरस्त्वानुवाकष्टत् ॥ ५३ ॥ अग्निर्मूर्द्धाऽनुवाको द्विवेष्ट्योऽन्तान्त्रिवेष्टनः । येन ऋषयोऽनुवाको द्विवृत्पञ्चान्तवेष्टनः ॥ ५४ ॥ प्रोथद्विवृच्चान्तवर्जमापो हि द्विपरोऽन्तवृत् ॥ नमस्ते चानुवाकेषु सप्तस्वाद्यो द्विवेष्टनः ॥ ५५ ॥ अनुवाकान्तवृत्षट्सु द्रापे अन्धाष्टसु द्विष्टत् ॥ द्वाश्मिन्महतीत्याद्याः सर्वे चैवान्तवेष्टनाः ॥ ५६ ॥ अश्मन्नूर्ज्जं गिरन्नु द्विवृदिमा मेति नवैकता ॥ समुद्रसप्तसु

द्विवृन्नमस्ते ह्रस्से त्रिवृत् ॥ ५७॥ ये देवादिषु च द्विवृदाजुह्वानोऽन्तवेष्टनः। ताए सवितुः पञ्चसु द्विवृत्तु शुक्रज्योत्यनुवाकवृत् ॥ ५८॥ द्विवृदिम एतानुवाकाऽए-ताऽअर्षंति तत्त्रिवृत् ॥ वाजाद्द्योऽनुवाकाः स्युरनुवा-कान्तवेष्टनाः ॥ ५९ ॥ द्विवृद्वाजस्यानुवाकः पयः पृथि-व्यान्तु त्रिवृत् ॥ ऋताषाडेकैकं यच्चन्नो द्वयोर्द्विवृत्पवीतान्त-वत् ॥ ६० ॥ त्रिषु स्याऽग्निं युनज्म्यादिष्वनुवाकेषु च द्वि-वृत्। स्वाहोन्त्रिवृत्पवीतो द्विव्यांयोस्त्रिः पुनाति ते ॥ ६१ ॥ त्रिवद्धापचन्तानां द्विवाद्यद्वर्जं त्वदृदाम्बनम् ॥ मो-दाहं युञ्जन्ति जोऽन्तवृदा व्याघ्रादिषु द्विवृत् ॥ ६२॥ पञ्चविं-शतिषु मन्त्रेषु स्यात्पितृभ्यः स्वधान्तवृत् ॥ अद्भ्यस्त्वाद्यासु द्विवृद्दिमर्ठ० स्वविरिति त्रिवृत् ॥ ६३ ॥ उदीरतादिषु द्विवृत् अमस्यैव तु वेष्टनम् । त्वया त्रिवेष्ट्यः प्रथ-मा दृत्वैकं लोमानि च द्विवृत् । ६४ ॥ भूद्रुह्योर्यवञ्जं स्य द्वे-वाध्यायः सर्वाधिवेष्टनः ॥ स च शुद्रेर्व्यमन्त्रः स्यादध्याय क्रिया-न्तादे द्विवृत् ॥ ६५ ॥ इसमं स्यादिषु द्विवृद्धोता यज्ञत्सु चान्तवृत् । त्रिवृत्पूर्वाम्बिनौ छागाद्यन्तवृत्सादनन्तरम् ॥ ६६ ॥ त्रिवृत्पराम्बिनौ छागौ वजस्यत्यग्निचान्तवृत् । देवस्वस्त्यादिषु द्विवृद्देवो स्यत्यंतवेष्टनः ॥ ६७ ॥ अग्निनद्य च स्वूपस्था त्वामद्येति नयैकता ॥ तेजोऽन्त-वृदिमाद्विवृद्भिषा युगलैकता ॥ ६८ ॥ नद्विवृद्धो अग्नी-

न्नयेऽन्त्यवृद्धिङ्कारानुवाकवृत् ॥ हिरण्यपाण्यादिन-
वाभीजनस्य द्विवेष्टनः ॥ ६९ ॥ कायादयोऽनुवाकस्यानु-
वाका ह्यन्तवेष्टनः ॥ हिरण्यगर्भेत्यध्याये प्रजापतयऽन्त-
वृत् ॥ ७० ॥ यः प्राणतो द्विवृचन्द्रमास्तदत्यन्तवेष्टनः ॥
युञ्जन्तीति त्रिषु द्विवृद्धवो युगलैकता ॥ ७१ ॥ स्विष्टचतुर्षु
वायुश्चा पञ्चसु स्याद्द्विवेष्टनः ॥ अग्निः पशुरसीत्य-
वर्ज्यं वृद्धिवृद्धचान्त्ययैकता ॥ ७२ ॥ उत्सक्थ्याद्यनुवाकेषु
पञ्चसु स्याद्द्विवेष्टनः ॥ अम्बस्त्वारभ्य चत्वारः सोमा-
दयोंऽतमेकता ॥ ७३ ॥ रोहिताद्द्वंसमायुक्तः श्मितिर-
न्धोऽन्तवेष्टनः ॥ शुद्धवालस्य प्रभृत्यवदित्याद्यन्तमेकता ॥
७४ ॥ वृद्धयज्ञापालवशादि द्वैक्यं शिल्पास्तथान्तवृत् ॥ स-
प्तमूर्द्धानुवाकेषु मन्त्राणामन्तवेष्टनम् ॥ ७५ ॥ शादं चैवा-
नुवाकानामन्तकं चानुवाकवृत् ॥ पञ्चमूर्द्धानुवाकेषु
द्विवृदिमा नु कं त्रिवृत् ॥ ७६ ॥ अग्निश्चेति त्रिवृद्द्विवृद-
न्तरेषु त्रिषु त्रिवृत् ॥ वैश्वानरं चैव विद्यादग्नि-
रूपेण चान्तवृत् ॥ ७७ ॥ वैश्वानरस्य सुमतावादयः ष-
ड्द्विवेष्टनः ॥ द्विवृत्समास्त्वेत्यध्याय आपश्चिदन्त्यवेष्टनः ॥
७८ ॥ संवत्सरोऽसि द्विवृदित्यन्वाकोऽनुवाकवृत् ॥ होता
यक्षदेकादशपूर्वश्चैवापरो द्विवृत् ॥ ७९ ॥ देवं बर्हिरप-
रो द्विव कृचिमुष्णिहमात्रिका ॥ ऊर्ध्वंतऽङ्गणांतेषु त-
न्तनुमन्त्राश्चतान्तवृत् ॥ ८० ॥ द्विवेष्टमिन्द्राय वयोधसऽइ-

त्यन्तयोर्द्वयोः ॥ समिद्धोऽअग्निरध्याये मन्त्राःसर्वे द्वि-
वेष्टनाः ॥ ८१ ॥ अन्त्यानामनुवाकानां त्रयाणामनुवाकवृ-
त् । द्विवृदश्याजराध्यायौ बृहन्निदिति चान्त्यवृत् ॥
८२ ॥ द्विवृद्यज्ञायतोऽध्यायो द्युभिरक्तुभिरन्त्यवृत् । त्रि-
ष्टानि च विभक्तारं द्विवृदन्ये तु वेष्टनाः ॥ ८३ ॥ सहस्र-
शीर्षामन्त्रेषु चतुर्विंशतिषु द्विवृत् । न तस्य त्रिवृदेषो ह
येनद्यौर्दमसु द्विवृत् ॥ ८४ ॥ त्रिवृद्द्युभिरह्नोभिस्तु द्विवृ-
द्वायुः पुनाति च । सविता त्रिवृदन्ये द्विवृत्स्योना पृथिवी त्रि-
वृत् ॥ ८५ ॥ ऋचँवाचन्त्रिवृदन्योऽन्त्यार्द्धवर्ज्जं द्विवेष्टनः ॥
ऊतिभिः सहितः कया त्वमादिचतुष्षु द्विवृत् ॥
८६ ॥ अहानिशान्त्रिष्टद्वीरगिष्ठयऽइति द्विवृत् ॥
द्यौः शान्तिरन्तवेष्ट्यः स्यादृते दृंह त्रिवेष्टनः ॥
८७ ॥ ज्योक्तेऽसन्दृशमस्तेऽस्तु यतस्तच्चक्षुस्त्व द्विवृत् ।
आददे देविदेव्यश्चेतीन्द्रैक्यं प्रैत्विति द्विवृत् ॥ ८८ ॥
मखस्यास्यस्य नवैक्यं यमाय त्रितयैकता ॥ द्विवृत्ग-
र्भोऽनुवाकस्तु विश्वासान्त्यं विना त्रिवृत् ॥ ८९ ॥ आददे-
चतुष्कैकं यस्ते द्विवृत्परोऽन्त्यवृत् । समुद्राय तद्द्विनैक्यं य-
मायेति द्विवेष्टनः ॥ ९० ॥ विश्वाऽआशाः पञ्चैक्यं स्वा-
हा पूष्णोऽनुवाकवृत् ॥ अभीमन्तु द्विवृद्याते चतुष्कैक्यम्य त्रि-
द्विवृत् ॥ ९१ ॥ यावतीत्यनुवाकैक्यन्त्रिषः संवृगथान्त्यवृत् ॥
स्वाहा प्राणानुवाकानामष्टानामनुवाकवत् ॥ ९२ ॥ आ-

यासाय युगैकत्वं यमायेत्यन्तवेष्टनः ॥ ८२ ॥ ईशावास्य-मिदं सर्व्वं द्विवेष्ट्यं सर्व्वसम्मतम् । ४ ॥ इति क्रमकारिका शिक्षा समाप्ता ॥

# पाणिनीयशिक्षा ॥

श्रीगणेशायनमः ॥

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा ॥ शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोऽः ॥ १ ॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः ॥ पुनर्व्यक्ती करिष्यामि वाच्ऽउच्चारणे विधिम् ॥ २ ॥ त्रिषष्टिश्चतुःषष्टिर्वा वर्णाऽः शम्भुमते (१)मताऽः॥ प्राकृते संस्कृते चापि स्वयं प्रोक्ताऽः स्वयम्भुवा ॥ ३ ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ॥ यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमा स्मृताः ॥ ४ ॥ अनुस्वारो विसर्गश्च ᳲकᳳपौ चापि पराश्रितौ॥ दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुतएव च ॥ ५ ॥ १ ॥ आत्मा बुद्ध्या (२)समेत्यार्थान्मनो युङ्क्ते विवक्षया ॥ मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥ प्रातःऽसवनयोगं तञ्छन्दो गायत्रमाश्रितम् ॥ ७ ॥ कण्ठे माध्यंदिनयुगं मध्यमं त्रैष्टुभानुग-

---

१ सम्भवतो मतः । इति 'क' पुस्तकपाठः ।

(२) समेत्यार्थान् (२) इति 'ख' पुस्तकपाठः ॥

म् ॥ तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥ सो-
दीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ॥ वर्णाञ्जनय-
ते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥ स्वरतः कालतः
स्थानात्प्रयत्नानुप्रदानतः ॥ इति वर्णविदः प्राहुर्निपु-
णं तं निबोधत ॥ १० ॥ २ ॥ उदात्तश्चानुदात्तश्च स्वरित-
श्च स्वरास्त्रयः ॥ ह्रस्वो दीर्घः प्लुत इति कालतो नियमा-
ऽचि ॥ ११ ॥ उदात्ते निषादगान्धारावनुदात्तऽऋषभ-
धैवतौ ॥ स्वरितः प्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ १२ ॥
अष्टौ स्थानानि वर्णानामुरः कंठः शिरस्तथा ॥ जिह्वामू-
लं च दन्ताश्च नासिकौष्ठौ च तालु च ॥ १३ ॥ ओभावश्च
विवृत्तिश्च शषसा रेफ एव च ॥ जिह्वामूलमुपध्मा च ग-
तिरष्टविधोष्मणः ॥ १४ ॥ यद्योभावप्रसन्धानमुकारादि प-
रं पदम् ॥ स्वरांतं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १५ ॥ ३ ॥
हकारं पञ्चमैर्युक्तमंतस्थाभिश्च संयुतम् ॥ औरस्यं तं वि-
जानीयात्कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥ कंठ्यावहाविचुयशा-
स्तालव्या ओष्ठजावुपू ॥ स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतु-
लसाः स्मृताः ॥ १७ ॥ जिह्वामूले तु कुः प्रोक्तो दंत्योष्ठ्यो
वः स्मृतो बुधैः ॥ एऐ तु कंठतालव्या ओऔ कण्ठोष्ठजौ
स्मृतौ ॥ १८ ॥ अर्धमात्रा तु कण्ठ्यस्य ह्येकारैकारयोर्भ-

वेत् ॥ ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९॥
संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ॥ घोषा वा सं-
वृताः सर्वे अघोषा विवृताः स्मृताः ॥२०॥४॥ स्वराणामू-
ष्मणां चैव विवृतं करणं स्मृतम् ॥ तेभ्योऽपि विवृतावेङौ ता-
भ्यामैचौ तथैव च ॥२१॥ अनुस्वारयमानां च नासिकास्था-
नमुच्यते ॥ अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥
२२ ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वरानुगः ॥ अ-
नुस्वारस्तु कर्तव्यो नित्यं ह्नोः शषसेषु च ॥२३॥ अनुस्वारे
विवृत्यां तु विरामे चाक्षरद्वये ॥ द्विरोष्ठ्यौ तु विगृह्णी-
याद्यत्रौकारवकारयोः ॥ २४ ॥ व्याघ्री यथा हरे-
त्पुत्रां दंष्ट्राभ्यां न च पीडयेत् ॥ भीता पतनभेदाभ्यां त-
द्वद्वर्णान्प्रयोजयेत् ॥२५॥५॥ यथा सौराष्ट्रिका नारी त-
क्राँऽइत्यभिभाषते॥ एवं रङ्गाः प्रयोक्तव्याः खेअराँ इ-
व खेदया ॥२६॥ रङ्गवर्णं प्रयुञ्जीरन्नोग्रसेत्पूर्वमक्षरम् ॥
दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥२७॥ हृद-
ये चैकमात्रस्तु अर्धमात्रस्तु मूर्धनि॥नासिकायां तथार्धं च
रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन
समनुस्वरन् ॥ मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्श-
नम् ॥२९॥ मध्ये तु कंपयेत्कंपमुभौ पार्श्वौ समौ भवेत् ॥
स रंगं कंपयेत्कंपं रथीवेति निदर्शनम् ॥ ३० ॥ एवं

वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताऽः ॥ सम्यग्व-
र्णप्रयोगेण ब्रह्मलोके महीयते ॥३१॥६॥ गीती शी-
घ्री शिरःकंपी तथा लिखितपाठकः ॥ अनर्थज्ञोऽल्पकं-
ठश्च षडेते पाठकाधमाऽः ॥ ३२ ॥ माधुर्यमक्षरव्यक्तिः
पदच्छेदस्तु सुस्वरऽः ॥ धैर्यं लयसमर्थं च षडेते पा-
ठका गुणाः ॥ ३३ ॥ शङ्कितम्भीतमुद्घुष्टमव्यक्तमनुना-
सिकम् ॥ काकस्वरं शिरसि गन्तथा स्थानविवर्जित-
म् ॥ ३४ ॥ उपांशु दष्टं त्वरितं निरस्तंविलम्बित-
ङ्गद्गदितं प्रगीतम् ॥ निष्पीडितं ग्रस्तपदाक्षरञ्च
वदेन्न दीनं न तु सानुनास्यम् ॥ ३५ ॥ प्रातः पठेन्नि-
त्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ॥ मध्यंदिने
कण्ठगतेन चैव चक्राह्वसङ्कूजितसंनिभेन ॥ ३६ ॥
तारन्तु विद्यात्सवनं तृतीयं शिरोगतन्तच्च सदा प्रयो-
ज्यम् ॥ मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरः-
स्थितेन ॥३७॥७॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः
शरः स्मृताः ॥ शेषाः स्पृष्टा हलः प्रोक्ता निबो-
धानुप्रदानतऽः ॥ ३८ ॥ यमोऽनुनासिका नह्रौ-
नादिनो हझषः स्मृताः ॥ ईषन्नादा यणो जशश्च श्वासिनस्तु
खफादयऽः ॥ ३९ ॥ ईषच्छ्वासांश्चरो विद्याद्गोर्धामै-
तत्प्रचक्षते ॥ दाक्षीपुत्रऽः पाणिनिना येनेदं व्यापितम्भु-

वि ॥४०॥८॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्य-
ते ॥ ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥४१॥ शि-
क्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥ तस्मात्साङ्गम-
धीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥८॥ उदात्तमाख्या-
ति वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा ॥ उपान्त-
मध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव ॥४३॥ उ-
दात्तं प्रदेशिनीं विद्यात्प्रचयं मध्यतोऽङ्गुलिम् । निहतं तु
कनिष्ठिक्यां स्वरितोपकनिष्ठिकाम् ॥४४॥ अन्तोदात्तमा-
द्युदात्तमुदात्तमनुदात्तं नीचस्वरितम् ॥ मध्योदात्तं स्व-
रितं द्व्युदात्तमिति नवपदशय्या ॥ ४५ ॥ अग्निः सो-
मः प्रवो वीर्यं हविषां स्वर्बृहस्पतिरिन्द्राबृहस्पती ॥
अग्निरित्यन्तोदात्तं सोम इत्याद्युदात्तं प्रेत्युदात्तं वइत्य-
नुदात्तं ॥२६॥ नीचस्वरितम् ॥ ४६ ॥ हविषां मध्योदा-
त्तं स्वरिति स्वरितम् ॥ बृहस्पतिरिति द्व्युदात्तमिन्द्राबृ-
हस्पती इति त्र्युदात्तम् ॥४७॥ अनुदात्तो हृदि ज्ञे-
यो मूर्ध्न्युदात्त उदाहृतः ॥ स्वरितः कर्णमूलीयः सर्वा-
स्ये प्रचयः स्मृतः ॥४८॥९॥ चाषस्तु वदते मात्रां द्विमात्रं त्वे-
व वायसः(१) ॥ शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रका-
म् ॥४९॥ कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ॥ न त-

---

(१) द्विमात्रं वायसोऽब्रवीत् इति "ख" पुस्तकपाठः ॥

स्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥ सु-
तीर्थादागतं व्यक्तं स्वाध्यायं सुव्यवस्थितम् ॥ सुस्वरेण
सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥५१॥ मन्त्रो हीनः स्वरतो
वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यज-
मानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥
अवक्षरं ह्यनायुष्यं विस्वरं व्याधिपीडितम् ॥ अ-
क्षता: शस्त्ररूपेण वज्रं पतन्ति मस्तके ॥ ५३ ॥
हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् ॥ ऋग्यजुःसा
मभिर्दग्धो वियोनिमधि गच्छति ॥ ५४ ॥ हस्तेन वेदं
योऽधीते स्वरवर्णार्थसंयुतम् ॥ ऋग्यजुःसामभिः पूतो ब्र-
ह्मलोके महीयते ॥५५॥११॥ शङ्करः शाङ्करीं प्रादाद्दा-
क्षीपुत्राय धीमते ॥ वाङ्मयेभ्यः समाहृत्य देवीं वाच-
मिति स्थितिः ॥५६॥ येनाक्षरसमाम्नायमधिगम्य महे-
श्वरात् ॥ कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
५७॥ येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ॥ त-
मश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ ५८ ॥ अज्ञा-
नान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ॥ चक्षुरुन्मीलितं
येन तस्मै पाणिनये नमः ॥५९ ॥ त्रिनयनमभिमुखनिः
सृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः ॥ स भवति ध-
नधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति

वीति ॥ श्लोकः ॥ ६० ॥ अथ शिक्षामात्मो
अ इकारं स्वराणां यथा गौत्यचोऽष्टोदात्तं चापक
रएकादश ॥ इतिवेदाङ्गनासिकाशिक्षा समाप्त